एकमेवाद्वितीयम्[1] इत्यादिकारणवाक्येषु एकत्वादीनां निर्वाहः उक्तो भवति। तेन च अविभक्तनामरूपापन्नावस्थाविशिष्टत्वादेकत्वनिर्वाहः कथितो भवति। समनन्तरवाक्ये "तदैक्षत बहु स्याम्" इति बहुभवनसङ्कल्पः श्रूयते। बहुभवनमित्युक्ते एकस्य बहुधा—अनेक प्रकारेण भवनमित्यर्थः। तदुक्तं "हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि[2]" इति श्रुत्या बहुभवनं नानानामरूपभाक्त्वमेवेति स्पष्टम्। एवं च एतादृशबहुभवनप्रतिकोटिभूतं एकत्वमिति ज्ञायते। एवं शक्तिश्च शक्तिश्च शक्ती इति अविभक्तनामरूपापन्नशक्तिः विभक्तनामरूपापन्नशक्तिश्च कथ्येते। ताभ्यां विशिष्टौ अविभक्तनामरूपापन्नशक्तिविशिष्टः (स्वस्थावस्थः) विभक्तनामरूपापन्नशक्तिविशिष्टश्च (क्षुभितावस्थः)—इत्येवं कैवल्यलीलोभयावस्थौ परमात्मानौ कथ्येते। तयोरद्वैतमिति विग्रहेऽपि उपपादितदिशा सृष्टिप्रलयवाक्यानां समन्वयः कथितो भवति। अविभक्तविभक्तनामरूपापन्नावस्थावत्त्वभावनया कारणवाक्यगतैकत्वनानात्वयोः विरोधपरिहारः उक्तो भवति॥

एवं शक्तिश्च शक्तिश्च शक्ती, ताभ्यां विशिष्टौ शक्तिविशिष्टौ जीवपरमात्मानौ। तयोरद्वैतं शक्तिविशिष्टाद्वैतमिति विग्रहवेलायां जीवपरमात्मनो भेदाभेदप्रतिपादकश्रुत्योर्विरोधः परिहृतः। किञ्चिज्ज्ञत्वशक्तिविशिष्टो जीवः, सर्वज्ञत्वशक्तिविशिष्टः शिवः इत्यर्थलाभेन भेदनिरूपणात् तयोरद्वैतम् इत्यनेन मुक्तिकालिकाभेदस्यापि निरूपणात् समन्वयः। एतेन संसारदशायां भेदः, मुक्तिकाले च अभेदः इति कालभेदाद्विरोधपरिहारः उक्तो भवति॥

परस्परं भिन्नयोः कथं अभेदसंभवः इत्याशङ्कापि अनेनैव पदेन परिहृता भवति। प्रथमोक्तविग्रहरीत्या प्रलयकाले अव्यक्तशक्तिविशिष्टः शिवः, सृष्टिकाले व्यक्तशक्तिविशिष्टो भवति इत्यर्थबोधनेन अवस्थाद्वयापन्नयोः

[1] छा-6 2-1. [2] छा-6-3-2.

अभेदलाभेन विरोधपरिहारः। एवं अस्य सर्वस्यापि प्रपञ्चस्य शक्तिविकासरूपत्वेन जीवस्यापि तदन्तर्भूतत्वेन शक्तेश्च परमात्मसमवायस्वरूपत्वेन तयोः भेदाभेदसत्त्वेन जीवब्रह्मणोः भेदाभेदः सिध्यति। एवं उभयोरपि जीवब्रह्मणोः स्थूलसूक्ष्मशक्तिमत्त्वकथनेन उभयोः अंशांशिभावोऽपि बोधितः। अग्नेः विस्फुलिङ्गस्य च सूक्ष्मस्थूलशक्तिमतोर्हि अंशांशिभावः प्रत्यक्षसिद्धः। अग्निः अंशी, विस्फुलिङ्गाः अंशाः इति। तयोः स्वरूपतो भेदो नास्ति। तथापि अग्नित्वेन कणत्वेन च भेदः स्फुरति। एवं प्रकृतेऽपि जीवब्रह्मणोः अंशांशिभावप्रतीत्या अंशांशिनोः भेदाभेदसत्त्वेन जीवस्य ब्रह्माभेदः मुक्तिदशायां संभवतीति न विरोधावकाशः॥ एवं अस्य शब्दस्य नानामुखत्वेन सर्वाक्षेपपरिहारपूर्वकं सिद्धान्तासाधारणार्थस्य सूचनात् अस्य दर्शनस्य 'शक्तिविशिष्टाद्वैतम्' इत्येव संज्ञा युज्यते॥

श्रीकरभाष्यकाराणां तु अयं आशयः। शक्तिविशिष्टाद्वैतमिति पदं श्रीकण्ठशिवाचार्यैरपि उपयुज्यते। यथा श्रीकण्ठभाष्ये जिज्ञासाधिकरणे "ततः सकलचिदचित्प्रपञ्चाकारपरमशक्तिविशिष्टाद्वितीयवैभवस्य" इत्यादिप्रयोगेन अयं शब्दः तन्मतसाधारणः। श्रीकण्ठाचार्यश्च केवलभेदवादिनः। तथोक्तं तैः "अधिकं तु भेदनिर्देशात्' इतिसूत्रभाष्ये[1] "न वयं ब्रह्मप्रपञ्चयोः अत्यन्तमेव भेदवादिनः घटपटयोरिव, तदनन्यत्वपरश्रुतिविरोधात्। न वा अत्यन्ताभेदवादिनः शुक्तिरजतयोरिव, एकतरमिथ्यात्वेन तत्स्वाभाविकगुणभेदपरश्रुतिविरोधात् न वा भेदाभेदवादिनः,वस्तुविरोधात्। किन्तु शरीरशरीरिणोरिव गुणगुणिनोरिव च विशिष्टाद्वैतवादिनः'—'अनन्यत्वं नाम विनाभावरहितत्वम्। भेदश्च स्वाभाविकः" इत्यादि। एवं च अत्यन्तभेदवादिना श्रीकण्ठशिवाचार्येण स्वसिद्धान्तस्य शक्तिविशिष्टाद्वैतमिति व्यवहारात् भेदाभेदवादे

1. श्रीकण्ठभाष्य–2-1-22.

कुल वा उपलभ्येत ? एतत्सर्वमपि रामानुजश्रीकण्ठसम्मतविशिष्टाद्वैतात् महद्वैलक्षण्यं अस्य शक्तिविशिष्टाद्वैतस्य ॥

शक्तिविशिष्टाद्वैतपदस्वीकार एव शिवशक्तिसामरस्यं सम्यग्बोध्येत। शिव इव तत्सदृधर्मिणी शक्तिरपि सच्चिदानन्दरूपेति प्रागेवोक्तम्। अतस्तयोः सामरस्यं सहजमेव। शिवशक्तिसामरस्यमेवं उपवर्ण्यते नवकल्याणमठ श्री. कुमारस्वामिभिः । "The absolute is at once static and dynamic. The static aspect of the Absolute is called ईश्वर, शिव or लिङ्ग and the dynamic aspect of the Absolute is called चर, शक्ति or जङ्गम in the Veerashaiva Philosophy. The चर or शक्ति is the dynamic divine will which is the personality of the Absolute Truth or शिवलिङ्ग. This divine will exists therefore in the Absolute Truth by the relation of identity ie सामरस्य. It is this integral relation of शिव and शक्ति or शक्तिविशिष्टाद्वैत that is the Veerashaiva welfanshanung—the world view of a Veerashaiva. For he views the whole world as the expression of the divine will under the stress and guidance of the Divine static and holds that there is only one चित् शक्ति, the integral conscious power of the Divine Spirit to characterise which modern science is still fighting shy."

(Veerashaiva philosophy and Mysticism p. 44–45.).

एतादृशवैलक्षण्यसूचनायास्य दर्शनस्य शक्तिविशिष्टाद्वैतपदं समुचितं भाति। श्रीकण्ठभाष्यव्याख्यातारः अप्पय्यदीक्षितास्तु "श्रीकण्ठभाष्यमपि अन्ततो ब्रह्मविवर्तवाद एव विश्राम्यति। शङ्कराचार्यश्रीकण्ठाचार्ययोः अभिप्रायभेद एव नास्ति" इति शिवाद्वैतनिर्णये आनन्दलहर्यां च विस्तरेण निरूप्य श्रीकण्ठाचार्यसम्मतदर्शनं शिवाद्वैतमिति स्पष्टं सिद्धान्तयन्ति। एतेन

ब्रह्माद्वैतशिवाद्वैतपदयोः पर्यायत्वमेवोक्तं भवति । एवं च एतद्दर्शनस्यापि शिवाद्वैतसंज्ञाकरणे ब्रह्मविवर्तवादरूपत्वमेव अस्यापि स्यात् । ब्रह्मविवर्तवादे च जगत्सर्वं मिथ्या, ब्रह्म निर्विशेषम्, जगतो मिथ्यात्वादेव ज्ञानमेव मोक्ष-साधनम्, उपनिषत्सु भेदवाक्यानां न स्वार्थे प्रामाण्यम् । वीरशैवसिद्धान्ते तु, जगत्सत्यं, ब्रह्म सविशेषम्, शिवोऽहंभावनासहिता परा भक्तिरेव मोक्ष साधनम्, भक्तादिशरणपर्यंतं विद्यमानस्य उपासनाप्रयुक्तस्य भेदस्य ऐक्यस्थले अभेदे पर्यवसानात् अङ्गलिङ्गसामरस्यमेव मोक्षः, उपनिषत्सु सर्वाण्यपि वाक्यानि स्वार्थे प्रमाणानि । एवमनयोर्दर्शनयोः परस्परं अत्यंतविलक्षणत्वेन ब्रह्माद्वैतवादापरपर्यायेण अप्पय्यदीक्षितादिभिस्तथाप्रसिद्धिं प्रापितेन शिवा-द्वैतपदेन एतद्दर्शनस्य व्यवहारः सर्वथा न युज्यत इति प्रतिभाति ॥

वीरशैवधर्मस्य शक्तिविशिष्टाद्वैतसंज्ञया व्यवहरणविषये आधुनिक-दार्शनिकाः श्रीकुमारस्वामिनः एवं अभिप्रयन्ति । "In the domain of metaphysics, Advaita admits one entity, Dvaita admits two entities, Visistadvita admits three entities, Shakti visistadvaita admits four entities, प्रकृति, पुरुष, पराप्रकृति and परब्रह्म." "That there is an integral association between these four entities is clear enough from शक्तिविशिष्टाद्वैत which is the Veerashiva designaticn of philosophical theism."(Veerashiva Philosophy and Mysticism p 60-61)

एवं च एतत्सिद्धान्तासाधारणार्थसूचकत्वात् श्रीकरभाष्यक्रियासारा-दिषु तथा व्यवहारात् सांप्रदायिकैः सर्वैरपि विद्वद्भिरंगीकृतत्वात् आधुनि-कैरप्यादृतत्वात् एतावतैव लोके एवमेव प्रसिद्धं गतत्वाच शक्तिविशिष्टा-द्वैत मिति संज्ञास्य दर्शनस्य युक्तेति भावयामः ॥

## तृतीयोऽध्यायः

### (अ) सिद्धान्तः सम्प्रदायश्च

सर्वेष्वपि दर्शनेषु भागद्वयं वर्तते – सिद्धान्तः साधनमार्गश्चेति। तत्तद्दर्शनानुगुणप्रमाणप्रमेयभागः सिद्धान्तशब्देनोच्यते। सिद्धान्तसिद्धफल-साधनाय अनुष्ठेयक्रियाक्रमनिरूपणपरो भागः साधनमार्गशब्देनोच्यते। एतदुभयं मिलित्वैव एकं दर्शनं भवति। 'प्रामाणिकत्वेनाभ्युपगतोऽर्थः सिद्धान्तः' इति न्यायसूत्रे सिद्धान्तस्य लक्षणमुक्तम्। अयमर्थःप्रामाणिकत्वेन अस्माभिः अङ्गीकृत इति प्रमाणोपपत्त्यादिभिः साध्यमानोऽर्थः सिद्धान्तशब्देन उच्यत इत्यर्थः। 'इदमत्र तत्त्वं, इदं चास्य स्वरूपम्' इति स्वरूपलक्षणविचारादि-निरूपणपरो भागः सिद्धान्तशब्देनोच्यते। एतादृशतत्वस्य साधनमेतादृशम् इति निरूपणपरो भागः साधनमार्गपदेनोच्यते। स एव आचरणमार्गः संप्रदायश्चेत्युच्यते॥

एतदुक्तं भवति। मानवजीवनस्यैकं लक्ष्यं वाच्यम्। लक्ष्यहीनं जीवनं पशुजीवनतुल्यमेव स्यात्। तादृशं लक्ष्यं किम्? किं वा तस्य स्वरूपम्? किं वा तत्र प्रमाणं इत्यादिविचारपरो भागः सिद्धान्तपदेनोच्यते। एतादृशं च लक्ष्यं केनोपायेन साध्येत? इत्येतादृशलक्ष्यसाधनमार्गविचारपरो भागः समय-संप्रदायादिशब्दैरुच्यते। यथा रामानुजाचार्यैर्निरूपितं तत्त्वं विशिष्टाद्वैत-दर्शनपदेनोच्यते, साधनमार्गः श्रीवैष्णवसंप्रदायपदेनोच्यते। एवं आनन्द-तीर्थैर्निरूपितं तत्त्वं द्वैतदर्शनपदेनोच्यते, साधनमार्गश्च वैष्णवसंप्रदायशब्दे-नोच्यते। एवं शङ्कराचार्यैः प्रदर्शितं तत्त्वं अद्वैतदर्शनपदेनोच्यते, साधन-मार्गश्च निर्विशेषवस्तुसाधनमार्गः ज्ञानमार्गपदेनोच्यते; सविशेषवस्तुसाधन मार्गश्च तत्तत्पुरुषेच्छानुरोधेन शैवो वा वैष्णवो वा भवितुमर्हति, त्रिमूर्तीनां समत्वात्॥

एवं एतद्दर्शनेऽपि भागद्वयं वर्तत एव। तत्र साधनमार्गभागस्य वीरशैवसंप्रदायः षट्स्थलोपासनम् इति च प्रसिद्धिर्वर्तते। सिद्धान्तभागस्य च

शक्तिविशिष्टाद्वैतमिति नाम। तत्र संप्रदायभागस्वरूपनिर्णयविषये नाधिकः क्लेशः, तत्पराणां ग्रन्थानां बहूनां सत्त्वत्। किंतु शक्तिविशिष्टाद्वैतदर्शने किं तत्त्वम्, किं वा तत्त्वस्वरूपम् इत्यादिनिर्णयः इदानींतनपरिस्थितौ दुश्शक एव वर्तते। श्रीनन्दीमठमहाशयैरपि वीरशैवमते तत्त्वनिर्णयः अतीव दुश्शक इत्युच्यते (कन्नडनाडिन चरित्रे पुट २१) ॥

## (आ) प्रमाणानि ख्यातिश्च

अत्रेदं चिन्तनीयम् । प्रामाणिकत्वेन अभ्युपगतोऽर्थः सिद्धान्त इत्युक्तम् । तत्र सर्वैरपि सैद्धान्तिकैः कीदृशप्रमाणमूलकत्वं कस्येति अवश्यं वक्तव्यम् । अत एव 'मानाधीना मेयसिद्धिः' इत्युच्यते । अतश्चात्र कीदृशानि प्रमाणानि अवलम्ब्य एतत्सिद्धान्तार्था निर्णीयन्त इति प्रथमं वक्तव्यं आपतति ॥

एतद्दर्शने च त्रीण्येव प्रमाणानि—प्रत्यक्षानुमानशब्दभेदात् । तत्र प्रत्यक्षस्य, अनुमानस्य शब्दस्य च लक्षणस्वरूपादिविचारे पराक्रान्तं सर्वैरपीति नात्राधिकं प्रस्तूयते ॥

ज्ञानानां च स्वतः प्रामाण्यं तत्र तत्र प्रसाधितम् । शुक्तौ इदं रजतमित्यादिभ्रमनिर्वाहः कथम् इति चेत् यथार्थख्यात्यैव । सिद्धान्ते परिणामवाद एव सम्मत इति उत्तरत्र वक्ष्यते । अत एव पञ्चीकरणप्रक्रियैव सिद्धान्तसम्मता । तथा च तत्तत्पदार्थारंभकाणां मूलभूताणूनां साम्यं क्वचित् वर्तत एव । शुक्तौ विद्यमानं कालकरं यन्मूलकं तदेव रजतेऽपि कालकत्वहेतुः । अनयोः क्वचिदवयवसारूप्यमवर्जनीयम् । तन्निबन्धन एव च भ्रमः । तथा च भ्रमविषयभूताः सादृश्यप्रतीतिनियामकाः अवयवाः परमार्था एव । तद्विषयत्वात् भ्रमोऽपि यथार्थ एव । अत एवास्मिन् सिद्धान्ते यथार्थख्यातिरङ्गीक्रियते ॥

तर्हि शुक्तौ रजतज्ञानस्य रजते रजतज्ञानस्य च को विशेष इति चेत्, शुक्तौ विद्यमानाः रजतावयवाः अत्यल्पाः--रजते तु बहव इतीयानेव विशेषः । तच्चाल्पत्वं बहुत्वं वा कार्यानुरोधादवसेयम् ॥

एवं प्रमाणसामान्यस्वरूपादिविचारे इतरदर्शनापेक्षया नूतनस्याधिकस्य वक्तव्यस्य अभावेऽपि शब्दविचारे परं एतद्दर्शने किञ्चिद्विचारणीयं वर्तते ॥

शब्दो द्विविधः लौकिको वैदिकश्चेति समान्यतः इतरे विभजन्ते । एतद्दर्शने तु, लौकिकः, वेदः, आगमश्चेति त्रिविधः । आगमा हि इतरमतेषु लौकिकशब्द एवान्तर्भवन्ति। एतन्मते तु ते स्वतन्त्रं प्रमाणम् । अतस्ते श्रुतिवदेव पृथक् स्वतन्त्रप्रमाणतया गण्यन्ते। आगमाः खलु वेदवदेव ईश्वरमुखात् साक्षाद्विनिर्गताः । अतोऽस्मिन् मते आगमानां स्थानं महत्तरम् ॥

## (इ) आगमानां स्थानं प्रामाण्यं च

केचित्तु[1] "श्रुतिपथगलितानां तन्त्रमार्गे निवेशः" इत्यादिप्रमाणानुरोधेन वेदमार्गभ्रष्टानां उद्धारायैव आगमा उपदिष्टाः । अतो भ्रष्टानामेव आगमा उपादेयाः न तु सत्पुरुषाणामित्यभिप्रयन्ति । एतत्प्रत्युत्तररूपा ग्रन्था बहव उत्थिताः । तौ च वादविवादौ अतिविस्तृतौ प्रकृतानुपयुक्तौ । परं तु अत्रायं सारांशः । आगमप्रामाण्यसंरक्षणं च प्रकारद्वयेन क्रियते । श्रुत्यविरुद्धत्वात् आगमानां प्रामाण्यं यामुनाचार्यप्रभृतिभिः विशिष्टाद्वैतिभिः साध्यते । आगमानां भ्रष्टपुरुषोद्धारार्थं परमात्मना उपदेशोऽपि सत्पुरुषाणां नानुपादेयत्वं सिद्ध्यति । "[2]स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा । इति भारतमाख्यानं मुनिना संप्रकीर्तितम्" इत्यनेन स्त्रीशूद्राद्यर्थं महाभारतं व्यासमहर्षिणा कृतमित्युच्यते । एवं तर्हि सत्पुरुषाणां महाभारतं अनुपादेयं किम् ? इति प्रश्ने किमुत्तरम् ? पतितानपि नरान् उद्धारयति चेत् किमुत सत्पुरुषान् इति

[1] शैवपरिभाषा P. 126. [2] म.भा. आदिपर्व.

कैमुतिकन्यायावलम्बने, तत् प्रकृतेऽपि तुल्यम्। अयमेकः प्रकारः आगमप्रामाण्यसंरक्षणे विशिष्टाद्वैतिसम्मतः॥

अपरश्च प्रकारः शक्तिविशिष्टाद्वैतिनाम्। ते त्वेवं मन्यन्ते। श्रुतीनां आगमानां च ईश्वरोपदिष्टत्वसाम्ये आगमानां अप्रामाण्यशङ्कैव नोदेति। सर्वज्ञः परमेश्वरः कथं वा परस्परविरुद्धमर्थं उन्मत्तवत् उपदिशेत्। श्रुतिष्वेव परस्परविरोधप्रतीतौ यथा वा उभयसमन्वय एव वक्तव्यः, न तु अन्यतराप्रामाण्यं, तथा श्रुत्यागमयोः विरोधप्रतीतावपि परस्परसमन्मय एव प्रदर्शनीयः, न त्वागमानां अप्रामाण्यम्। अन्यथा ईश्वरोपदिष्टागमविरोधात् श्रुतीनामेव अप्रामाण्ये आशङ्किते किमुत्तरम्। अतः आगमानां श्रुतिवदेव स्वतः प्रामाण्यम्। तदेतदुक्तं क्रियासारे उपोद्घातप्रकरणे—

[1]आगमानां अशेषाणाम् उपदेष्टा महेश्वरः।
वेदानामपि नैतेषु युक्तः प्रामाण्यसंशयः॥
प्रामाण्यमविशेषेण निगमागमवर्त्मनाम्, इति।

सिद्धान्तशिखामणौ च—

[2]वेदसिद्धान्तयोरैक्यं एकार्थप्रतिपादनात्।
प्रामाण्यं सदृशं ज्ञेयं पण्डितैरेतयोःसदा॥ इति।

ननु उभयोः प्रामाण्ये तुल्येऽपि आगमानुसारेणैव श्रुत्यर्थो वर्णनीय इति कथने किं विनिगमकमिति चेत्, आगमाः खलु स्पष्टार्थाः इति पूर्वमेवोक्तम्। अन्यच्च—वेदा हि ईश्वरनिश्वसितरूपा इत्युच्यन्ते। तेन च अप्रयत्नपूर्वकोच्चारणविषयत्वं वेदानां उक्तं भवति। आगमास्तु प्रयत्नपूर्वकमुपदिष्टा इति आगमानां उपक्रमावलोकनेन अवगम्यते। प्रश्नप्रतिवचनपूर्वकं हि आगमानामुपक्रमो दृश्यते। एवं च अप्रयत्नपूर्वकं उपदिष्टेभ्यो वेदेभ्योऽपि प्रयत्नपूर्वकमुपदिष्टा

1 क्रि. उपो-14. 2 सि.शि-5-13.

आगमा एव प्रमाणतमाः इति सिद्धम्। लोकेऽपि यदा ज्ञानपूर्वकं वाक्यं प्रयुङ्क्ते तदा तत् स्पष्टार्थकं भवति। यदा तु अनवधानादिना अज्ञानपूर्वकं वाक्यं प्रयुङ्क्ते तदा तद्वाक्यं अस्पष्टार्थं उच्चावचं च भवेत्। अनयोर्मध्ये आद्यमेव उपादेयतममित्यत्र न कोऽपि विवदति। एवं प्रकृतेऽपि अबुद्धिपूर्वं उच्चरितश्रुत्यपेक्षया बुद्धिपूर्वं उच्चरितागमानामेव प्रमाणतमत्वं उपादेयतमत्वं च सिद्धमेवेति। तदेतदुक्तं क्रियासारे—

> [1]अथवा शिवनिश्वासश्रुतिभ्यस्ते शिवागमाः।
> अधिकाः शिववक्त्रेभ्यः साक्षादेव विनिर्गताः॥
> [2]श्वसितानां श्रुतीनां चैतादृशो महिमा यदि।
> ताल्वोष्ठपुटनिष्पन्दपुरस्सरमुदीरिते॥
> [3]आगमे शिववक्त्रोत्थे वक्तव्यो महिमा कियान्।
> समस्ताः श्रुतिसंघाश्च यस्य निःश्वसितं श्रुतम्॥
> तस्यैव साम्बमूर्तेस्तु ताल्वोष्ठपुटयत्नतः।
> [4]निर्गतानामागमानां परोक्षश्रुत्यपेक्षया।
> प्रामाण्यं सिद्ध्यति ततः।" इति॥

## (ई) वेदागमयोस्समप्रामाण्यम्

परं तु इदमत्र चिन्तनीयं। शैवागमाः खलु बहुविधाः। एवं सर्वेषामप्यागमानां ईश्वरोपदिष्टत्वाविशेषे कामिकाद्यष्टाविंशत्यागमानामेव प्रमाणतमत्वं, तदनुरोधेनैव श्रुतेरर्थवर्णनं च कथं सङ्गच्छत इति। एतद्दोषपरिजिहीर्षया केचन एवं वदन्ति—कामिकाद्यागमा एव ईश्वरोपदिष्टाः अन्येषामीश्वरोपदिष्टत्वं तु औपचारिकमेवेति। परं तु नायं वादः क्षोदक्षमः। कामिकाद्या एव ईश्वरोप-

---

1 क्रि. उपो. 30. 2 क्रि. 29-26. 3 क्रि. 29-27. 4 29-38 5 29-39.

दिष्टा न, त्वन्ये इत्यत्र न हि नियामकं वर्तते। प्रत्युत सर्वेषामप्यागमानां अविशेषेणैव ईश्वरोपदिष्टत्वं श्रूयते। यथा सिद्धान्तशिखामणौ—

[1]आगमा बहुधा प्रोक्ता शिवेन परमात्मना।
शैवं-पाशुपतं सोमं लाकुलं चेति भेदतः ॥
[2]तेषु शैवं चतुर्भेदं तंत्र सर्वविनिश्चितम्।
वाम च दक्षिणं चैव मिश्रं सिद्धान्तसंज्ञिकम् ॥
[3]शक्तिप्रधानं वामाख्यं दक्षिणं भैरवात्मकम्।
सप्तमातृपरं मिश्रं सिद्धान्तं वेदसम्मतम् ॥ इति

क्रियासारे—[4]कापालिकमतान्याहुः शैवान्यन्यानि यानि च।
अवैदिकानि सर्वाणि नाचरेत्तानि वैदिकः ॥
[5]शैवान् पाशुपताश्चैव जटिलान् मुण्डिनस्तथा।
लिङ्गिनो व्रतिनश्चैव पाषण्डान् परिवर्जयेत् ॥ इति

एवं सति कामिकादीनामेव प्रमाणतमत्वं कथमिति केनचित् सूक्ष्मबुद्धिना जिज्ञासुना जिगीषुणा वा प्रश्ने किमु वक्तव्यम्? अत्र इत्थमुच्यते सिद्धान्तशिखामणौ—

[6]वेदैकदेशवर्तिभ्यो सांख्यादिभ्यो महामुने।
सर्ववेदानुसारित्वात् शैवतंत्रं विशिष्यते ॥ इति

अत्र शैवपदं प्रकृतवीरशैवपरं, सर्ववेदानुसारित्वादिति निर्देशात्। एतदपि तत्रैवोक्तम्:—

[7]शैवतंत्रमिति प्रोक्तं सिद्धान्ताख्यं शिवोदितम्।
सर्ववेदार्थरूपत्वात् प्रमाणं वेदवत्सदा ॥इति॥

एवं चात्रशैवपदेन शैवागमप्रभेदस्य सिद्धान्तागमस्यैव ग्रहणं स्पष्टमुक्तम्। एवं तत्रैव "सिद्धान्तं वेदसम्मतम् ॥

---

[1] सि.शि 5-9. [2] सि शि 5-10 [3] सि.शि 5-11.
[4] क्रि. 1-23. [5] क्रि. 1-24. [6] सि.शि 5-7. [7] सि शि 5-8.

वेदधर्माभिधायित्वात् सिद्धान्ताख्यः शिवागमः ।
वेदबाह्यविरोधित्वात् वेदसम्मत उच्यते ॥

इति सर्वांशेऽपि वेदसम्मतत्वात् इतरशैवागमापेक्षया वैलक्षण्यमुपपादितम् । एवं क्रियासारेऽपि—

आगमा द्विविधा ज्ञेयाः वेदानामविरोधिनः ।
विरोधिनश्च तत्रैते श्रुतिमार्गानुरोधिनः ॥
कर्षणादिप्रतिष्ठान्ता वैदिकानुष्ठिता यथा ।
तथैव वीरशैवानां आगमा वैदिका मताः ॥
वेदाविरुद्धरूपेण वैदिकत्वमुदाहृतम् । इति

एवं तत्रैव "शैवान् पाशुपतान्" इत्यत्र शैवपदं-वीरशैवेतरशैवपरमित्यप्युक्तम् । श्रीकरभाष्ये क्रियासारे च "पत्युरसामञ्जस्यात्" इत्यधिकरणे अयमर्थः स्पष्टमुपपादितः ॥

एवं च सर्वेऽपि ग्रन्था आगमानां प्रामाण्यसंरक्षणे वेदमेव शरणी कुर्वन्ति । एवं च आगमानां प्रामाण्यस्य वेदाधीनत्वे आगमानुरोधेन वेदानामर्थवर्णनं कथम् इति । एवं निश्वसितरूपवेदापेक्षया बुद्धिपूर्वककृतिरूपानां आगमानां आधिक्यपक्षे आगमप्रामाण्यसंरक्षकवेदानामेव आगमापेक्षया आधिक्यपक्षे च युक्तिषु सति कःसिद्धान्तः ? इति प्रश्ने आद्यपक्ष एव इति केचित् सांप्रदायिका मन्यन्ते । शक्तिविशिष्टाद्वैतसिद्धान्ते वेदानां यथा स्वतः-प्रमाण्यं तथा आगमानामपि स्वतःप्रामाण्यं सम्मतम् । एवं सति आगमप्रमाण्यसंरक्षणार्थं वेदापेक्षा कुतः ? किं च वेदागमयोः स्वतःप्रमाण्याविशेषेऽपि आगमानां मान्यतमत्वे न कोऽपि वीरशैवः विवदति । अत एव आभाणकोऽपि—

वेदशास्त्रपुराणाद्या ज्ञेया वेश्यावधूरिव ।
आगमास्तु शिवप्रोक्ता ज्ञेयाः कुलवधूरिव ॥इति॥[1]

1 लौकिकी गाथा.

वेश्यास्त्री यथा सर्वसाधारणा तथा वेदाद्या सर्वसाधारणा सर्वानपि प्रीणयन्ति । आगमास्तु शिवैकान्ता शिवैकासाधारणाश्च । अत वेदेभ्य आगमा एव श्रेष्ठा । अत एव शरणाग्रेसरै प्रवर्तिते वचनशास्त्रे वेदनिन्दा तत्र तत्र दृश्यते । यत्र कुत्रचित् ग्रन्थे वेदाविरोधात् आगमाना प्रामाण्य समर्थन च वेदश्रद्धाजडाना विश्वासोत्पादनायैव । अत निश्वसितरूपवेदापेक्षया आगमा एवाधिका इति ॥

अन्ये तु द्वितीयपक्षमवलम्बन्ते । शैवागमेषु बहुषु सत्सु कामिकादीनामेव उपादेयतमत्व आगमाना स्वत प्रामाण्यात् इति कथनमेव श्रद्धालुजनव्यामोहनमात्रम् । हिन्दूजनसामान्यस्य हि वेदा एव सर्वापेक्षया उपादेयतमा । वेदविरोधमन्तरा को वा अप्रमाण्यहेतु पाशुपतकापालिकादि शैवागमेषु वक्तु शक्य ? अत स्वत प्रमाणान्यपि आगमा स्वप्रामाण्य सरक्षणे वेदमुखमेव निरीक्षन्ते । वचनशास्त्रेषु खलु वेदवदेव आगमानामपि निन्दा बहुल उपलभ्यत एव आचरणरहितस्य आगमस्यैव निन्दाया तथा तात्पर्यमितिचेत् तत् वेदानामपि तुल्यम् । "[1] नाह वेदैर्न तपसा न दानेन न चेयज्या । शक्य एवविधो द्रष्टुम्" इत्यादिभगवद्वचनेष्वपि वेदनिन्दा श्रूयत एव । सा च निन्दा "भक्त्या त्वनन्यया शक्य अहमेवविधोऽर्जुन । ज्ञातु द्रष्टु च तत्त्वेन प्रवेष्टु च परन्तप"[2] इत्यनन्तरवक्ष्यमाणभक्तिप्रशसार्थैव । एव ज्ञानाचरणरहितो वेदो निरर्थक इत्यभिप्रायेणैव वचनशास्त्रेषु वेदनिन्दा प्रवृत्ति । अत एव बहुषु वचनेषु वेदागमप्रशसापि दृश्यत एव ॥

वेदाना निश्वसितरूपत्ववचन च वेदाना प्रमाणतमत्वमेव द्रढयति । लोके हि असत्यकथनार्थमेव बुद्धिपूर्विका प्रवृत्तिरपेक्ष्यते, न सत्यकथनाथम् । अबुद्धिकुशला हि बाला सत्यमेव वदन्ति, बुद्धिकुशलास्तु प्रौढा कदा

[1] भ गी 11-53 [2] भ गी 11-54

चिदसत्यमपि वदन्ति । एवं च वेदानां निश्वसितत्वोक्त्या तत्र दोषकलङ्कस्य अवकाश एव नास्ति इति सूच्यते । बुद्धिपूर्वकत्वे तु कापालिकादितन्त्रवत् वेदविरुद्धवचनस्यापि उपदेशसंभवो वर्तत एव । अतः आगमानां स्वतःप्रामाण्येऽपि तन्निश्चयस्य वेदाधीनत्वेन वेदमन्तरा आगमावस्थितेरेव असंभवेन आगमापेक्षया वेदा एव अधिका इति मन्यन्ते ॥

अपरे तु विमर्शनविचक्षणाः पक्षद्वयस्यापि सामरस्यं वर्णयन्ति । द्वितीयपक्षोक्तदिशा वेदानां प्रामाण्यातिशयो वर्तत इति सत्यम् । वेदापेक्षया आगमानां स्पष्टार्थत्वेन तदपेक्षया आगमाधिक्यवर्णनं च युज्यत एव । एवं च प्रामाण्यस्य उभयोः समानत्वेऽपि सर्वप्रमाणमूर्धन्यत्वेन स्वरूपांशे वेदाः उपादेयतमाः । अर्थांशे तु स्पष्टार्थत्वेन आगमाः उपादेयतमा इति न कस्यापि कोलाहलस्यावकाश इति ॥

नन्वेवं आगमानां स्वातन्त्र्येण प्रामाण्याङ्गीकारेण किं साधनीयमिति चेत् अत्रोच्यते - शिवागमाश्च शिवेन लोककल्याणकामेन उपदिष्टा इति तत्रैवावगम्यते । नात्र विवादश्च कस्यापि । श्रुतयोपि परमात्मशब्दवाच्येन शिवेनैव प्रोक्ता इति "अस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेद अथर्वाङ्गिरसः" (बृहदारण्यक ६-५-११) इत्यादिश्रुतिसिद्धम् । एवं च श्रुत्यागमयोः उभयोरपि ईश्वरोपदिष्टत्वे उभयोः प्रामाण्यं अविशेषेणैव अङ्गीकरणीयमिति चानुपदमेवोक्तम् । तत्र श्रुतयोत्यन्तगभीराः कुत्रचित् स्वार्थनिर्णये प्रमाणान्तरमपेक्षन्ते, तच्च प्रमाणान्तरं किं युक्तमिति परिशीलने अद्वैतिभिः युक्तिः प्रधानप्रमाणत्वेन अङ्गीकृता, द्वैतिभिश्च प्रत्यक्षम्, विशिष्टाद्वैतिभिश्च ब्रह्मसूत्राणि च तथाङ्गीकृतानि । तदनुसारेण तैर्निर्वाहः प्रदर्श्यते । भास्करयादवप्रकाशैरपि श्रुत्युक्तत्वात् उभयमप्यङ्गीकरणीयमित्युक्तम् । श्रुत्यर्थस्य संशयग्रस्तत्वेपि श्रुत्युक्तत्वादङ्गीकरणीयमिति समाधानं न हृदयङ्गमम् । एतादृशस्थितौ श्रुत्यर्थस्य संशये श्रुतिसमानप्रामाण्यकानां आगमानां अनुरोधेनैव

अर्थवर्णनं युक्तम्। आगमास्तु सरला स्पष्टार्था मन्दमतीना सौकर्यायैवोपदिष्टा। तत्र अर्थसशयप्रसक्तिर्नास्त्येव। अतस्तदनुरोधेनैव श्रुत्यर्थवर्णन कर्तव्यमिति शक्तिविशिष्टाद्वैतिन अभिप्रयन्ति। एवञ्च श्रुत्यर्थनिर्धारण इतरमतापेक्षया अस्मिन् मते स्वरसत सभवति। श्रुत्यनुसारेणैव आगमाना प्रामाण्य वदतामितरेषा मते तु श्रुत्यर्थनिर्धारणाय प्रमाणान्तर खल्वन्वेषणीयम्। एतन्मते तु आगमे स्वतत्रैरेव अर्थनिर्णयात् तदनन्तर श्रुतिसमन्वय अतिसुलभो भवतीति विशेष ॥

## (उ) अस्मिन् दर्शने ब्रह्मसूत्राणा स्थानम्

एव आगमानुरोधेन वेदाताना अर्थो वर्णनीय इति सिद्धान्ते कृते तर्हि ब्रह्मसूत्रार्थविचारस्य का वा आवश्यकता इत्याक्षेप समुन्मिषति। अत्रेद वक्तव्यम्–वेदार्थस्य अनिर्णये प्रसक्ते "इतिहासपुराणाभ्या वेद समुपबृहयेत् बिभेत्यल्पश्रुताद्वेद मामय प्रतरेदिति" इति इतिहासपुराणाद्यानुगुण्येन अर्थो वर्णनीय इति सर्वैरप्युच्यते। अत इतिहासपुराणादीनि वेदोपबृहणानि इत्युच्यन्ते। एव उपबृहणवशादेव वेदार्थस्य निर्णेयत्वे मतान्तरेषु वा मीमासाशास्त्रस्य कि प्रयोजनम्? अत एव वाच्यम्। उपबृहणानुरोधेन अर्थनिर्णयेऽपि युक्त्युपोद्बलित एवार्थ सुस्थिरो भवति अत एव 'श्रोतव्यो मन्तव्यो निदिध्यासितव्य' इति श्रूयते। गुरुमुखात् तत्त्वश्रवणानन्तर मनन कर्तव्यमित्युच्यते। श्रुतस्यैव तत्त्वस्य मनन युज्यते। मनन नाम श्रुतस्यार्थस्य युक्तिभि प्रतिष्ठापनमेव। न हि गुरुणा उपदिष्टेऽर्थे शिष्यस्य अप्रामाण्य सशयस्य अवकाश। किंतु स्वगृहीतस्य अर्थस्य अविचाल्यत्वाय युक्त्यन्वेषण शिष्यस्य। एतदेव मननम्। एतदुक्त भवति। अधिकारिणो हि त्रिविधा, मन्दा मध्यमा उत्तमाश्चेति। कदाचित् ईश्वरे स्वत एव श्रद्धाधिक्ये वर्तेन। अधिकार्यविचारे च मृदुमतीनां तेषां बुद्धिरेव कलुषिता स्यात्। "शास्त्रज्ञा

बहुक्लेशं बुद्धेश्चलनकारणम् " इति हि श्रूयते । एतादृशाधिकारिविषयं वाक्यं सूक्ष्मतंत्रेऽपि दृश्यते—

विविधानि च तंत्राणि श्रुतानि बहुधा मया ।
तथापि चञ्चलं चित्तं बहुश्रवणकारणात् ॥ (1–10) इति

एतादृशानां उपदेशमात्रेणैव कृतकृत्यता । ततोऽपि किंचिदतिशयित-बुद्धीनां किंचिदिव ज्ञानपिपासा जायते । ते मध्यमाः । तेषां उपबृंहणादिना ज्ञानपिपासान्तिः । ये तु तर्ककर्कशमतयः उत्तमप्रज्ञाः ते तु स्वगृहीतेऽर्थे कारणमन्विष्यन्ति, तेषां बुद्धिस्वाभाव्यात् । तदेतदुच्यते—

आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना ।
यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः ॥ (मनुस्मृ, 12–106) इति

एतादृशकर्कशमतिकण्डूतिनिवृत्यर्थमेव न्यायविचाररूपब्रह्मसूत्रस्य प्रवृत्तिरिति नानर्थक्यं ब्रह्मसूत्राणाम् ॥

## (ऊ) वचनशास्त्राणां स्थानम्

वीरशैवसमाजे शिवशरणवचनानां स्थानं अतिमहत्तरं वर्तते । 'वचनशास्त्रम्' इत्यपि सबहुमानं व्यवहारो दृश्यते । इतरवैदिकसमाजे उपनिषदां यावती मान्यता तावती वीरशैवसमाजे वचनशास्त्रस्येत्युक्तिः सार्थकैव । ये भक्त्यतिशयवशात् परमात्मनं परमशिवं साक्षात्कृत्य जीवन्मुक्ततुल्या विहरंति, त एते शिवशरणा इत्युच्यन्ते । त एव 'निरञ्जनाः' 'निराभाराः' 'जङ्गमाः' इति च व्यवह्रियन्ते । जगति धर्मसंस्थापनाय अवतीर्णा एते महाविभूतयः कारणपुरुषा इति संभाव्यन्ते । एते महाशयाः संसारदावानलतप्तान् पशुप्रायान् जीवान् दृष्ट्वा संजातदयाः सन्तः तेषां उद्धारणाय तत्तद्देशकालाद्यनुसारेण तत्त्वान्युपदिदिशुः । स्वेन अनुभूयमानं निरतिशयानन्दं एतेऽपि अनुभवंतु!

इति विशालया भावनया स्वानुभूतं अर्थं प्रकाशयामासुः। एवं प्रकरणादिवशात् अनशत एव बहिर्निस्सृता स्वानुभवमूला दिव्यामृतवाण्येव वचनशब्देन उच्यते। एतादृशवैशिष्ट्यस्य सत्त्वादेव तस्य शास्त्रशब्देनापि व्यवहारो युज्यते। परंतु तानि वचनानि तत्त्वनिर्णये कियत्पर्यन्तं उपकुर्वंतीति विमर्शनीयम्॥

वचनशास्त्राणि खलु तत्तत्कालानुगुणं प्रवृत्तानि। पुरुषाणां विचित्रबुद्धित्वात् तत्तत्पुरुषबुध्यनुगुणं उपदेशे उपदेशाः सहजतया बहुविधाः स्युरेव। एतदेव क्रियासारेऽप्युक्तं — (29-17)

'यावच्छ्रोतुस्तावदेव कथितव्यं महात्मना। अधिकारानुरूप्येण।'' इति

लोकेऽपि हि प्रकृतस्य विषयस्य प्रशंसार्थं इतरनिन्दादिकं क्रियत एव। अत एव वचनेषु परस्परं विरोधः बहुलं उपलभ्यते। कुत्रचित् वेदागमनिन्दा, कुत्रचित् वेदागमप्रशंसा, कुत्रचित् जगतो मिथ्यात्वम्, कुत्रचित् सत्यत्वम्, कुत्रचित् ब्रह्मणः सगुणत्वम्, कुत्रचित् निर्गुणत्वम् इत्यादिरीत्या वचनानि दृश्यन्ते। तदेतत् श्री नन्दीमठ महाशयैरपि उक्तम् 'ममामायिदेव नीरशैवमेतत् अद्वैतपरमिति वदति। कुत्रचित् द्वैतविशिष्टाद्वैतवादोऽपि वचनेषु दृश्यते' इति (कन्नडनाम्नि चरित्रे-पु 219)। एवं च शरणवचनानि तत्त्वनिर्णये न पर्याप्तानि। अथ एवमाशङ्क्येत—उपनिषदामपि गमनिका इत्थमेव दृश्यते—कुत्रचित् द्वैतं, कुत्रचित् अद्वैतम्, कुत्रचित् सगुणं, कुत्रचित् निर्गुणं इत्येवंरीत्या। एवं सति उपनिषत्प्रमाणानुरोधेन वा कथं तत्त्वनिर्णयः स्यात् इति। सत्यम्, परंतु उपनिषदां शरणवचनानां च इदमेकं वैलक्षण्यं वर्तते। उपनिषदर्थनिर्णयार्थं मीमांसाशास्त्रं सन्नद्धं वर्तते। एवं न्यायपुरस्सरं निर्णीतार्थाः उपनिषदः तत्त्वनिर्णये प्रभवन्त्येव। शरणवचनानां तु एतादृशनिर्णयसामग्र्यभावात् तत्त्वार्थनिर्णयो दुश्शक एव। मनःपरिपाकसंपादनविषये तु वचनशास्त्रं अत्यावश्यकमुपयुज्येत॥

वयं तु भावयामः । वचनशास्त्रप्रवृत्तिः प्रायः द्वादशशतकैकाला-
दारभ्यैवेति विमर्शका अभिप्रयन्ति । तावत्येव काले अद्वैतविशिष्टाद्वैतादिवादाः
भारतदेशे सर्वत्र लब्धप्रचारा अभवन् । तद्वादानां व्याप्तिबलात् शिवशरणानां
हृदयेष्वपि तद्वादानां वासना लगेदेव । तादृशवासनानुरोधेनैव च तेषां
वचनेष्वपि तत्तत्सिद्धान्तछाया अपतत् । एवं च वचनशास्त्राणां तत्त्वनिर्णये
अपर्याप्तत्वे, उपनिषदां च नानामुखत्वे च कथमर्थनिर्णयः कर्तव्य इति चेत्
तत् पूर्वमेवोक्तं । आगमानुरोधेन उपनिषदां अर्थनिर्णयः कर्तव्य इति । एवं
निर्णीतार्थस्य दार्ढ्यार्थं च ब्रह्मसूत्रभाष्यादिरूपन्यायापेक्षा इति । परंतु
इदमत्र शोकस्थानं । यत् एतत्सिद्धान्तार्थनिर्णयसहकारिणः कामिकाद्यागमाः
प्रायः न दृष्टिपथे वर्तन्त इति तेषामागमानां नाम्ना उल्लेखः परं तत्र
तत्र ग्रन्थेषु शिलाशासनादिषु च दृश्यते । आगमवाक्यखंडास्तु तत्रतत्र
कुत्रचित् ग्रन्थकारैः उदाह्रियन्ते । एवं च पुनरपि घट्टकुट्यां प्रभातम् ।
उपनिषदां अर्थानिर्णयेन दूयमाने सति मनुजे आगमरूपसहकारिलाभेन उत्क-
ण्ठिते च, ते आगमा एव कार्त्स्न्येन नोपलभ्यन्त इति किमिदम्, दौर्भाग्यम् !
अथापि नातितप्तव्यम् । तादृशागमसाररूपः सिद्धान्तशिखामणिः उपलभ्यते ।
तदनुसारेण विरचिताश्च श्रीकरभाष्यक्रियासारशिवाद्वैतमञ्जरीवीरशैवानन्द-
चन्द्रिकादयो ग्रन्थाश्च उपलभ्यन्ते । एषां साहाय्येन कथंचित् सिद्धान्ततत्त्वं
निर्णेतुं शक्यते । परंतु श्रीकरभाष्यादीनां प्रायः परमतखण्डने दृष्टिरधिका
प्रतिभाति । तेन स्वसिद्धान्तार्थनिरूपणविषये तैः न कार्त्स्न्येन साहाय्यं
संपादयितुं शक्यम् । यद्यपि परमतखण्डनवशात् सामान्यतः स्वसिद्धान्तार्थोऽ-
वगम्येत, अथापि विशिष्य सिद्धान्तार्थः न तावता निर्णेतुं शक्यते । यथा
जगन्मिथ्यात्वस्य स्पष्टं तेषु खण्डनात् जगत्सत्यत्वं सिद्धान्ते सिध्येत । एवं
ब्रह्मणो निर्विशेषत्वस्य खण्डनात् ब्रह्मणो परिणाम्युपादानत्वमित्यादिकं परं स्पष्ट-
मवगम्यते । प्रधानार्थो यः भेदाभेदवादः स तु न सूक्ष्मेक्षिकया सयुक्तिकं

समर्थ्यते । भेदाभेदयोः विरोधः केवलतर्कावलम्बनेन प्रतिक्षिप्तः । प्रमेयांशे शोधनादेरपर्याप्तत्वेन एभिरपि तत्त्वनिर्णयः न साकल्येन समस्ति ॥

अत एव एतावता विद्वद्भिः इदमित्थमिति निर्णयकरणपूर्वकं कूलङ्कषतया सिद्धान्तार्थगर्भितः वीरशैवमतप्रकरणग्रन्थः नाद्यावधि प्रादुर्भूत इति भावयामः । शैवपरिभाषातत्त्वप्रकाशिकादयः मुक्तावपि भेदाभेदप्रतिपादका इति स्पष्टम् । यथा शैवपरिभाषाया अन्ते ईषद्भेदगर्भः अभेद एवैक्यमिति स्पष्टमुक्तम् । एवं तत्त्वप्रकाशिकाया[1] "मुक्तात्मानो हि शिवाः किन्त्वेते तत्प्रसादतो मुक्ताः" इत्यादि । अनन्तरमवतीर्णा अपि ग्रन्थाः नैककण्ठ्येन सिद्धान्ततत्त्वं प्रतिपादयन्ति । एतादृशगहनान्धकारसमये सर्वसंप्रतिपन्नसिद्धान्तशिखामणिशरणीकरणमेव वर्तते । यद्यपि सिद्धान्तशिखामणिः न तत्त्वप्रतिपादनायप्रवृत्ता, अपि तु षट्स्थलसिद्धान्तरूपसाधनमार्गनिरूपणायैव । अथापि इतरग्रन्थापेक्षया अयमेव तत्त्वनिर्णये सहायः स्यात् । पदार्थतत्त्वानुगुणं हि साधनमार्गं उपदिश्यते । एतादृशसाधनगम्यत्वात् तत्त्वं एतादृशमेव भवितुमर्हतीति निरूपयितुं शक्यत एव । अपि च साधनमार्गनिरूपणावसरे तत्र तत्र मध्ये सिद्धान्तार्था अपि निरूप्यन्त एव । तत्र युक्त्यन्वेषणादिकं परं अस्माभिः कर्तव्यमवशिष्यते । अतः सर्वागमसारभूतं समस्तवीरशैवसम्मतसिद्धान्तशिखामणिमेव सिद्धान्तार्थनिर्णये प्राधान्येन प्रमाणयामः । तद्व्याख्यातत्संवादितया च श्रीकरभाष्यक्रियासारादिकं उपपादयामः ॥

दासगुप्तमहाशयास्तु सिद्धान्तशिखामणेः प्रामाण्यविषये एवं अभिप्रयन्ति "सिद्धान्तशिखामणिः विविधमतेभ्यः उत्तमांशान् परिगृह्य तत्कोडीकारेण तत्त्वनिर्णये सहकारी न भवति । विशेषतः शङ्करमतच्छाया जीवेश्वरस्वरूपनिरूपणविषये व्याप्ता दृश्यते" इति । तथाह्युक्तम्—

---

[1] तत्त्वप्रकाशिका- 1-6

"SiddhantaSikhamani says that God is the controller, the mover of all living beings. Again it oscillates to the vedanta views that the individual souls, the objects of the world as well as the supreme controller are all but illusory imposition on the pure consciousness or Brahman. It admits both अविद्या and माया after the fashion of Shankarites. It is interesting to notice that the SiddhantaSikhamani borrows the idea of Karma from the Pashupathas who hold that the distribution of Karma is managed and controlled by God. It thus seems to present before us an eclectic type of thought which is unstable and still in the state of formation This explains the anthor's illdigested assimilation of elements of thought on *Pashupatha doctrine.* the varying Agama doctrines, the influence of Sankhya and ultimately the vedanta of Shankarites. This being so, in the 13th century we cannot expect a systamic Veerashaiva philosophy in its own individual character as a philosophical system in the time of Basava. It will be *easy for us to show that Allama prabhu, the teacher of* Basava was thoroughly surcharged with the vedantism of *the Shankara School.*"

(Dasgupta's History of Indian Philosophy–VOL. V, 50.)

परंतु यत्रकुत्रचित् अविद्यामायाशब्दप्रयोगमात्रेणैव अद्वैतमतच्छाया नापतेत। न हि शक्तिविशिष्टाद्वैतसिद्धान्ते अविद्यामायाशब्दप्रयोग एव विरुद्धः। अर्थस्तु कामं भिद्येत। सिद्धान्तसम्मतार्थसमन्वयप्रकारश्च तत्तदवसरे भविष्यति। षट्स्थलस्वरूपनिरूपणप्रकरणे (२१७ पुटे) एतत्तत्त्वं व्यक्तीभविष्यति। अतः सिद्धान्तशिखामणिविषये दासगुप्तोक्तं सर्वथा न क्षोदक्षमम्। इदंच उत्तरत्र सिद्धान्ततत्वनिरूपणावसरे स्वयं स्पष्टीभवति ॥

एतदत्रोक्त भवति। सत्य यद्यपि एतत्सिद्धान्तार्थनिर्णये महान् क्लेशो वर्तते इति। अथापि प्रमाणचतुष्टयमवलम्ब्यात्र प्रमेयानि निष्कृष्यन्ते। प्रथम सिद्धान्तशिखामण्यादिग्रन्था प्रमाणमूर्धन्यत्वेन सर्वैरपि वीरशैवैरादृता प्रमाणीकृता। द्वितीय तु षट्स्थलनामकसाधनमार्गस्वरूप प्रमाणीकृतम्। साध्यफलानुरोधी खलु साधनमार्गो भवति। अतश्च साधनस्वरूपपरिशीलनेन एतादृशसाधनसाध्य एतादृश फल भवतीति निश्चेतु शक्यत एव। अत षट्स्थलसप्रदायो द्वितीय प्रमाण कृतम्। तृतीय तु एतत्सिद्धान्तावतरणस्य य प्रधानोद्देश तत्परिशीलनमपि सिद्धान्तनिर्णये प्रमाण भवितुमर्हति। सर्व श्रुतिसमन्वयायेद दर्शन प्रवृत्तमिति श्रीपतिपण्डितप्रभृतिभि —

> द्वैताद्वैतमते शुद्धे विशेषाद्वैतराजके।
> वीरशैवैकसिद्धान्ते सर्वश्रुतिसमन्वय ॥

इत्यादावभिहितम्। भेदवादिभिर्हि भेदश्रुतीना मुख्यत्व, अभेदश्रुतीनामन्यार्थत्व वर्ण्यते। अभेदवादिभिश्च अभेदवाक्यानामेव मुख्यत्व भेदवाक्याना अन्यार्थत्व च वर्ण्यते। मतद्वयेऽपि श्रुत्येकदेशास्वारस्य अवर्जनीयमेव। अत सर्वासामपि श्रुतीना यथा स्वार्थे तात्पर्यं स्यात् तथा निर्वहणायेद दर्शन प्रवृत्तमिति तैरभिहित भवति। अतश्च सर्वश्रुतिसमन्वय मनसि कृत्वा तदनुरोधेन सिद्धान्तनिर्णये प्रयतामहे। एव चतुर्थं प्रमाणम् इदानीन्तनै एतन्मतीयप्रसिद्धपण्डितै साक समालोचनम्, तथा वचनशास्त्राणा समन्वयदृष्टिश्च ॥

एव मूलग्रन्थानुरोधेन साधनमार्गानुसारेण सिद्धान्तोद्देशानुगुण अनुभविनामाशय चानुसृत्य अस्मिन् प्रबन्धे एतत्सिद्धान्तस्वरूप निर्णेष्याम ॥

## चतुर्थोऽध्यायः

### एद्दर्शनवैलक्षण्यम् (अ) एवद्दर्शनावतारः

सर्वश्रुतिसमन्वयार्थमिदं दर्शनं प्रवृत्तमित्युक्तम् । परं तु अत्रेयं शंका समुन्मिषति । यद्यपि केवलाद्वैतवादे, केवलद्वैतवादे च श्रुत्येकदेशस्य स्वार्थे प्रामाण्यं वक्तुं न शक्यमिति न सर्वश्रुतिसमन्वय., अथापि सन्त्यन्येऽपि सर्वश्रुतिसमन्यार्थं प्रवृत्ताः । रामानुजाचार्यैः भास्कराचार्यैः यादवप्रकाशाचार्यैश्च भेदाभेदश्रुत्योरुभयोरपि प्रामाण्यं अङ्गीक्रियते । तत्र भास्करयादवप्रकाशौ भेदाभेदवादिनौ । अतस्तयोर्मते भेदाभेदश्रुत्योरविरोधः सुलभ एव । रामानुजाचार्यमतेऽपि विशिष्टवस्तुगतमेकत्वं, विशेष्ये विशेषणे च प्रत्येकमनेकत्वमित्यङ्गीकृत्य अभेदवाक्याना विशिष्टवस्तुपरत्वं, भेदवाक्याना प्रत्येकविशेषणविशेष्यपरत्व वर्ण्यते । ततश्चोभयविधश्रुत्योरपि न बाधस्तन्मते ॥

एवमेभिरेव सर्वश्रुतिसमन्वये प्रदर्शिते किमपरं अवशिष्यते एतद्दर्शनेन साध्यम् ? इति अवश्यं विचारणीयम् । रामानुजमतात् नास्य दर्शनस्य चारितार्थ्यं सभवति । सर्वश्रुतिसमन्वयवर्णने हि प्रकारद्वयमुक्तम् । केवलाद्वैतवादं केवलद्वैतवादं च परित्यज्य द्वैताद्वैतवादाङ्गीकारेण उभयविधश्रुत्योः समन्वयसाधनं एकः प्रकारः, विशिष्टवस्तुगत एकत्वं विशेषणविशेष्ययोः प्रत्येकं द्वैतमपि इत्यङ्गीकृत्य समन्वयप्रकारश्चापरः । तत्र रामानुजाचार्यैः परस्परं विरुद्धत्वेन द्वैताद्वैतवादो न युक्तः इत्यभिप्रायेण विशिष्टाद्वैतवादमवलम्ब्य श्रुतिसमन्वयः प्रदर्श्यते ॥

एवं स्थिते द्वैताद्वैतयोर्विरोध. यदि परिहृतो भवेत् तर्हि विशिष्टाद्वैतवादापेक्षयापि भेदाभेदश्रुतोः समन्वयः अतिम्वरसो भवेत् । तदेव प्रदर्श्यते श्रीपतिपण्डिताचार्यैः, ससारदशायां भेदः मुक्तिदशायां च अभेद इति भेदाभेदयोः कालभेदेन परिहार इति ॥

चन्द्रिकाशिवाद्वैतमञ्जर्यादिषु प्रपञ्चमिथ्यात्ववादस्य विस्तरशः दूषणदर्शनेन तादृशाद्वैतवादप्रसक्तिर्नास्ति ॥

किन्तु ब्रह्मणः सूक्ष्मशक्तिविशिष्टत्वावस्थायां प्रलयशब्दवाच्यायां कार्यप्रपञ्चस्य अभावेन न कोऽपि लौकिको व्यापारः प्रवर्तते । तस्यैव ब्रह्मणः स्थूलदशापन्नरूपायां कार्यावस्थायां सर्वोऽपि प्रापंचिको व्यवहारः । अतः कार्यावस्था व्यावहारिकीत्युच्यते । कारणावस्था च वास्तविकीत्युच्यते । वस्तुतः एवंभूतं ब्रह्म एवंरूपेण परिणमते इत्युपपादनवेलायां कारणावस्थायां वास्तवशब्दप्रयोगः । न तावता इतरमिथ्यात्वप्रसक्तिः । वस्तुतो मृदेकमेव द्रव्यं घटशरावादिनानाकारतां भजते इत्यादिव्यवहारेषु मृद एव सत्यत्वं घटादीनां असत्यत्वं च न विवक्षितम् । तद्वत् अत्र कारणावस्था वास्तविकी अवस्थेत्युच्यते । वस्तुतः शिव एव सन् जीवः कार्यावस्थायां भिन्न इव प्रतीयमानः मुक्त्यवस्थायां शिवाभेदं भजते इति कथनेन जीवावस्थावत् मुक्त्यवस्थापि वास्तविकी अवस्थैव । अयमत्र सारांश । [1]" अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत । अव्यक्तनिधनान्येव " इति भगवता गीतायां (अ, 2-28) आद्यन्ता वस्थे अव्यक्तशब्देन निर्दिष्टे । मध्यावस्था व्यक्तशब्देन । अव्यक्तावस्थैव एतावता वास्तविकीत्युक्ता । व्यक्तावस्थैव व्यावहारिकीति । व्यक्तावस्थायामेव व्यवहारसद्भावादिति ॥

एवं च प्रलय सृष्टि मुक्तिश्चेति अवस्थात्रये मध्यमावस्थायां रामानुजश्रीपतिपण्डितयोः नातीव अभिप्रायभेदो दृश्यते । प्रलयमुक्त्यवस्थाविचारे तु परस्परं वैलक्षण्यं अस्त्येव । एतदर्थं शक्तिविशिष्टाद्वैतपदेन सूच्यते । विशिष्टाद्वैतपदेन कार्यावस्थायां मतद्वयसाम्यं प्रदर्श्यते । रामानुजसम्मतं चिदचिच्छब्द परित्यज्य तत्स्थाने शक्तिशब्दयोजनया कारणावस्थायां मुक्त्यवस्थायां च अत्यन्तवैलक्षण्यं प्रदर्श्यते ॥

रामानुजमते हि ब्रह्मणोऽत्यन्तभिन्नचेतनाचेतनरूपपदार्थद्वयविशिष्टत्वं ब्रह्मण उच्यते । एवं च प्रलयकाले मुक्तिकालेऽपि वा चेतनाचेतनयोः परस्परं अत्यन्तवैलक्षण्यं भेदेन अवस्थानं च अङ्गीक्रियते । श्रीपतिपण्डितमते तु एकैव शक्तिः परमात्माविष्टा प्रपञ्चाकारेण परिणमते । सा च शक्तिः परमात्मनो नात्यन्तं भिन्ना न वात्यन्तं अभिन्ना, किन्तु भिन्नाभिन्ना च । "भेदाभेदात्मिका शक्तिः ब्रह्मनिष्ठा सनातनी" इत्यभियुक्तोक्तिस्तत्र प्रमाणम् । एवं संसारदशायां परमार्थतः परमात्माभिन्नस्य जीवस्य मुक्तौ ब्रह्मणा सह अत्यन्तं अभेद एव । मायाविष्टः परमशिवांश एव जीवः इति खलु अङ्गीक्रियते । अयमंशः स्वावसरे स्पष्टीभविष्यति । अतः कारणावस्थामुक्त्यवस्थयोः रामानुजमतादत्यन्तवैलक्षण्यमेव श्रीपतिपण्डितमते । एवमङ्गीकारेण रामानुजसम्मतविशिष्टाद्वैतवादमात्रेण न चारितार्थ्यमिति शक्तिविशिष्टाद्वैतवादावतारस्य अवसरः प्राप्नोत्येव ॥

अथैवं आशङ्क्येत । रामानुजाचार्यदर्शितविशिष्टाद्वैतवादे सर्वश्रुतिसमन्वयस्य प्रदर्शितत्वेन तद्रीतेः व्यक्तावस्थाया अङ्गीकृतत्वेन तावतैव सर्वश्रुतिसमन्वयवादस्य परिसमाप्त्या कारणावस्थायां मुक्त्यवस्थायां च रामानुजमताद्वैलक्षण्यं अङ्गीकृत्य मतान्तरप्रवर्तनं निरर्थमिति—अत्रेदं वक्तव्यम् । केवलद्वैताद्वैतवादापेक्षया रामानुजदर्शितविशिष्टाद्वैतवादे सर्वश्रुतिसमन्वयः संभवतीत्येतत् सत्यमेव । अथापि रामानुजमते ब्रह्मणः साक्षादुपादानत्वानङ्गीकारेण तदुपादानत्वबोधकानां वाक्यानां न यथायथ्यितार्थकत्वं संभवति । ब्रह्मविशेषणयोः चिदचितोर्हि साक्षात् परिणामाश्रयत्वं प्रकृत्यधिकरणे 'परिणामात्' इति सूत्रे श्रीभाष्ये स्पष्टमुक्तम् । एवं च ब्रह्मण उपादानत्वं कथम् । परिणामिद्वारकं भवतु उपादानम् । चिदचितावेव च साक्षात्परिणामाश्रयौ, ब्रह्मणस्तु तच्छरीरकत्वादुपादानत्वव्यवहारः । एवं उपादानत्वनिर्वाहः औपचारिक एव भवति । अत एव एकविज्ञानेन सर्वविज्ञानमपि द्वैतेनैव निर्वाह्यम् ।

तर्हि [1]"यथा सौम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात्" इति दृष्टान्त उच्यते। तत्र हि मृद एव हि घटात्मना परिणामः सर्वानुभवसिद्धः। दार्ष्टान्तिके तु परमात्मनः तथा परिणामो नाङ्गीक्रियते। अपि तु तद्विशेषणभूतयोरेवेति न दृष्टान्तदार्ष्टान्तिकयोरानुरूप्यम्। एवं च विशिष्टाद्वैतवादे ब्रह्मविशेषणयोः चिदचितोः उपादानत्वम्। शक्तिविशिष्टाद्वैतवादे तु शक्तिविशिष्टस्य ब्रह्मण उपादानत्वम्। किंच अत्र मुक्तौ जीवानां परमात्मनि ऐक्यमुच्यते। विशिष्टाद्वैतमते तु मुक्तौ भेदएव। एवं [2]"ब्रह्म वेद ब्रह्मैव भवति," इत्यादौ जीवस्य मुक्तौ ब्रह्मभावापत्तिः श्रूयते। तन्मते मुक्तौ अत्यन्तभेदस्यैव अङ्गीकारेण एतस्याः श्रुतेः स्वरसतो निर्वाहो न संभवत्येव। अतः अद्वैतद्वैतमतापेक्षया एतन्मते श्रुतिसमन्वयसम्भवेऽपि न सर्वश्रुतिसमन्वय इति तदर्थं शक्तिविशिष्टाद्वैतमतावतारः॥

## (आ) श्रीकण्ठाचार्यसम्मतशक्तिविशिष्टाद्वैतात् अस्य वैलक्षण्यम्

यद्यपि श्रीकण्ठशिवाचार्यैः वेदान्तानां शिवपारम्यसाधनपरं ब्रह्मसूत्रभाष्यं विरचितम्, अथापि प्रकृतसिद्धान्तस्य तस्य च महान् विशेषोऽस्ति। श्रीकण्ठाचार्यसम्मतशक्तिविशिष्टाद्वैतं च रामानुजसम्मतविशिष्टाद्वैतप्रक्रियातो न भिद्यत एव। [3]"अधिकं तु भेदनिर्देशात्" इति सूत्रे जीवब्रह्मणोरत्यन्तभेदः, अभेदव्यपदेशश्च तयोः शरीरशरीरिभावनिबन्धन इति स्पष्टमुक्तम्। मुक्तावपि जीवब्रह्मणोः अत्यन्त भेद एव। यद्यपि संकल्पाधिकरणे मुक्तस्य पशुत्वनिवृत्तिपूर्वकं शिवत्वप्राप्तिर्व्यपदिश्यते। तथापि तच्च शिवत्वं शिवसाम्यरूपमेव। उत्तरत्र मुक्तिस्वरूपनिरूपणावसरे नैतत् स्पष्टीभविष्यति। किं बहुना सिद्धान्ते सायुज्यमैक्यम्। श्रीकण्ठाचार्यैस्तु अनावृत्त्यधिकरणे "ब्रह्मणा सादृश्यं सायुज्यं मुक्तानाम्" इति सादृश्यमेव मुक्तानामुक्तम्। शक्तिविशिष्टेतिशब्दस्तु शब्दवैचित्र्यमात्रम्॥

---

[1] छा-6-1-4. [2] मु-3 2 9 [3] ब्र-सू; 2-1-22.

परिणामादितिसूत्रे च रामानुजरीत्यैव सूक्ष्मचिदचिच्छरीरकः परमेश्वरः कारणावस्थः, स्थूलावस्थचिदचिच्छरीरकः सः कार्यावस्थः इत्येवोच्यते। चेतनाचेतनयोरुभयोरपि ब्रह्मणो जगदाकारेण परिणामरूपकार्यानुकूलापृथक्सिद्धविशेषणत्वात् शक्तिपदेन व्यवहारः तैः कृतः। **कार्यानुकूलापृथक्सिद्धविशेषणं हि शक्तिः।** विष्णुपुराणे[1] "विष्णुशक्तिः परा प्रोक्ता क्षेत्रज्ञा च तथापरा। अविद्या कर्मसंज्ञान्या तृतीया शक्तिरिष्यते। यया तिरोहितत्वाच शक्तिः क्षेत्रज्ञसंज्ञिता। सर्वभूतेषु भूपाल तारतम्येन वर्तते" इत्यत्र चेतनाचेतनयोः शक्तिरूपत्वमुक्तम्। अत्र अविद्यापदं जीवावरणहेतुद्रव्यवाचित्वात् प्रकृतिमप्यभिधत्ते। एतदभिप्रायेणैव शक्तिविशिष्टाद्वैतमितिसंज्ञा कथ्यते। सिद्धान्ते तु ब्रह्मगुणभूतशक्तिविशिष्टाद्वैतमेव। अतश्च रामानुजमतान्न वैलक्षण्यमस्य श्रीकण्ठमतस्य। विष्णुशिवपारम्यमात्रं तयोर्वैलक्षण्यमिति न तन्मतादेतन्मतस्य चारितार्थ्यम्॥

## (६) भास्कराचार्यमतेनापि अस्य न चारितार्थ्यम्

भेदाभेदवादिनस्तु बहवः। सांख्याः जैनाः भाट्टाः इत्यादयः। वेदान्तिषु च भास्कराचार्याः यादवप्रकाशाचार्याश्च भेदाभेदवादिनः। उपनिषद्वाक्यसमन्वयविचारप्रकरणे नेतरेषां प्रसक्तिः। भास्कराचार्यैः प्रदर्शितभेदाभेदवादेनैव श्रुतिसमन्वये सिद्धे एतत्सिद्धान्तस्य अवसर एव नास्तीति आशङ्क्येत। परंतु भास्कराचार्यमते अचिद्ब्रह्मणोः भेदाभेदौ स्वाभाविकौ। चिद्ब्रह्मणोस्तु अभेद एव स्वाभाविकः। भेदस्तु औपाधिक इत्यङ्गीक्रियते। यथा भास्करभाष्ये ज्ञाधिकरणे—स्वाभाविकंचास्य ब्राह्मं रूपं औपाधिकं इतरत्। अंशाधिकरणे—स च भिन्नाभिन्नस्वरूपः, अभिन्नं रूपं स्वाभाविकं, औपाधिकं तु भिन्नम्॥

---

1 वि पु 6-7-11.

**अविभागेनदृष्टत्वाधिकरणे**—यथा च भग्ने घटे घटाकाशो महाकाश एवमत्रापिति–जीवपरयोश्च स्वाभाविकोऽभेद औपाधिकस्तु भेद, स तन्निवृत्तौ निवर्तते इत्यादि

स्वाभाविकस्वरूपाविर्भावो हि मुक्ति । मुक्तिदशायामभेदस्य श्रुत्युक्तत्वेन अभेद एव स्वाभाविक । भेदस्यापि स्वाभाविकत्वे स्वभावो दुरतिक्रम इति न्यायात् मुक्तावपि भेदस्य निवृत्तिर्न स्यात्। अतो भेद औपधिक एवेति तदाशय । एव च भेदश्रुतीना औपधिकभेदपरत्वमेव तन्मतेऽङ्गीक्रियते । तथाच औपचारिकत्वमेव भेदश्रुतीनां प्रकारान्तरेण उक्त भवेत् । उभयोरपि स्वाभाविकत्व यदि वर्णयितु शक्येत तदा श्रुतिस्वारस्य अधिक स्यात् । गत्यन्तराभाव एव च औपचारिकत्वं औपधिकत्व विशिष्टपरत्व इत्यादिक समाश्रयणीयम् । एव च जीवब्रह्मणो भेदाभेदविषये न सर्वश्रुतिसमन्वय भास्कराचार्यपक्षेऽपि इति शक्तिविशिष्टाद्वैतवादस्य अवकाश ॥

## (ई) यादवप्रकाशमतेनापि नास्य चरितार्थता

एव भास्कराचार्यप्रतिपादिते भेदाभेदवादे जीवपरयो औपाधिकत्वाङ्गीकारेण भेदवाक्याना न मुख्यार्थनिर्वाह समवर्तीति अस्वारस्यमालोच्य यादवप्रकाशाचार्यै प्रस्थानान्तर उपक्षिप्तम् ॥

एते चाचार्या *रामानुजाचार्यस्य पूर्वाश्रमे गुरव* इति *रामानुजाचार्यचरित्रादवगम्यते* । पाठप्रवचनवेलायामेव रामानुजाचार्यस्य प्रतिभातिशय विलोक्य गुरुर्विस्मय प्रापति च वर्ण्यते । रामानुजाचार्यैः विशिष्टाद्वैतसिद्धान्त स्थापनानन्तर च तत्सिद्धान्ताकृष्टचेतस *यादवप्रकाशाचार्यो अपि स्वसिद्धान्त* परित्यज्य विशिष्टाद्वैतिन अभवन्निति वर्ण्यते । अत तद्विरचित भाष्य तदानीमेव लुप्तम् ॥

श्रुतप्रकाशिकया *श्रीभाष्यव्याख्यया* तत्र तत्र *गुरुपरपराप्राप्त* यादवप्रकाशसम्मत ब्रह्मसूत्रार्थ अनूद्य दूषित । रामानुजाचार्यैश्च स्वीय

श्रीभाष्ये नविलक्षणत्वाधिकरणे तदनन्यत्वाधिकरणे च एतन्मतमुपवर्णयन्ति । वेदार्थसङ्ग्रहे च वर्णयन्ति । एतत्सर्वपरिशीलनाया इद मत प्रकृतशक्ति विशिष्टाद्वैतमतस्य सर्वेतरापेक्षया अत्यन्तसन्निहितमिति प्रतिभाति ॥ पर तु मुक्तावपि जीवपरयो भेदाभेदौ एव तत्सम्मतौ इत्यवगम्यते॥ वेदार्थसग्रह-व्याख्याया तात्पर्यदीपिकाया सुदर्शनाचार्या तथैव प्रतिपादयन्ति । एतच्च न शक्तिविशिष्टाद्वैतिभिरङ्गीक्रियते । मुक्तौ अत्यन्ताभेदस्यैव श्रुतौ प्रतिपादनात् अत्यन्ताभेद एव मुक्तौ, न तु भेदाभेदौ ॥

एव शक्तिविशिष्टाद्वैतसम्मत साधनमार्ग षट्स्थलोपासनरूप शिव पारम्यप्रतिपादक यादवप्रकाशसम्मत इत्यत्र न किञ्चित्प्रमाणमुपलभ्यते । एव च मुक्तिविषये साधनमार्गविषये च अनयोरत्यन्त वैलक्षण्य वर्तत इति यादव प्रकाशमतेन नास्य मतस्य निरवकाशत्वम् ॥

एव शङ्कराचार्यसम्मतात् केवलाद्वैतवादात्, आनन्दतीर्थसम्मतात् केवलद्वैतवादात्, रामानुजाचार्यसम्मतात् विशिष्टाद्वैतवादात्, श्रीकण्ठभाष्योक्त-विशिष्टाद्वैतवादात्, भास्करयादवप्रकाशसम्मतात् भेदाभेदवादाच्च अस्य दर्शनस्य वैलक्षण्य शक्तिविशिष्टाद्वैतपदेनैव सूचयितु शक्यमिति आलोच्यैव इदमेवास्य सञ्ज्ञेति द्वितीयाध्याये विस्तरश प्रतिपादितम्। श्रीकण्ठभाष्यव्याख्या-काराणा अप्पय्यदीक्षिताना सम्मत शिवाद्वैत च शङ्कराचार्यसम्मतब्रह्माद्वैतमेवेति पूर्वमेव कथितम् । ब्रह्माद्वैते च जगतो मिथ्यात्व, ब्रह्मणो निर्विशेषत्व, ज्ञाना न्मुक्तिरिति सम्मतम् । पसिद्धान्ते तु जगत्सत्य, ब्रह्म सविशेषम्, भक्तिरेव मुक्तिसाधनमित्यादि वैलक्षण्यमपि पूर्वमेव कथितम् । तथाच शङ्करमतादस्य चारितार्थ्यं न सम्भवति चेत् अप्पय्यदीक्षितोक्त शिवाद्वैतवादादप्यस्य चारितार्थ्यं न संभवत्येवेति स्वत एव सिध्यति । अत पूर्वोक्तसर्वदर्शनापेक्षया शक्ति विशिष्टाद्वैतदर्शनमिद अत्यन्तविलक्षणमेव ॥

## पञ्चमोऽध्यायः

### सिद्धान्तस्वरूपम्—(अ) षट्त्रिंशत्तत्त्वनिरूपणम्

अस्मिन् दर्शने शक्तिविशिष्टं पराशिवाभिधेयं चिद्रूपं निष्कलं परं ब्रह्म एकमेव तत्त्वम्। तत्स्वरूपं भाष्ये एव प्रदर्श्यते "वेदागमोभयवेदान्तप्रतिपादित स्वाभाविकाननशक्तिविशिष्ट जगदुभयकारण पशुपाशनियामक सकल-निष्कल स्थूलसूक्ष्मचिदचित्प्रकाशक सत्यज्ञानानन्तकल्याणगुणविभवाश्रयत्वं ब्रह्मत्वम्" इति। शक्तिश्च परमात्मनि अविनाभावेन नित्यसंबद्धा तत्स्वरूपतया वर्तते। शक्तिर्नाम सामर्थ्यम्। सामर्थ्यं विना न कापि व्यक्तिः वर्तते राजते मोदते वा। इयं च शक्तिः परमात्मनि स्वाभाविकी ज्ञानक्रियादिरूपेण नाना-प्रकारा अवतिष्ठते। सैव सकलप्रपञ्चनिर्माणकुशलस्य परमात्मनः उपादान-द्रव्यभूता, घटं चिकीर्षोः कुलालस्य मृत्पिण्ड इव॥

प्रलयावस्थायां उपयोगाभावात् सा शक्तिः कुसूलस्थबीजेऽङ्कुरजनन-शक्तिवत् परमात्मनि विलीना तदपेक्षया भिन्नव्यवहारायोग्या वर्तते। तदानीं स्वविलीननिखिलचिदचित्प्रपञ्चः शिव एक एव अवतिष्ठते, तदा च तत्स्वरूप-भूतायाः शक्तेः तस्मिन् विलयात्। एतदभिप्रायेणैव प्रवृत्तम् "सदेव सौम्येदमग्र आसीत् एकमेवाद्वितीयं ब्रह्म" (छा,6-2-1) इत्यादि वाक्यम्। "यदा तमः तन्न दिवा न रात्रिः न सन्न चासन् शिव एव केवलः" (4-18) इति श्वेताश्वतरश्रुतौ प्रलये शिवस्य केवलावस्था श्रूयते॥

एतादृशस्य शिवस्य ब्रह्मणः कदाचित् एकाकितया अवस्थानात् अरतिर्जायते। सर्वैश्वर्यसम्पन्नस्य महाराजस्येव अवाप्तसमस्तकामस्यापि परमात्मनः एकाकित्वनिबन्धनारतिनिवृत्तये स्वस्वातन्त्र्यादेव लीलाया प्रवृत्तिः उन्मिषति। तदैव इदं जगत् सृजेयं इति इच्छा जायते। तदेतदुच्यते "स एकाकी नारमत, स द्वितीयमैच्छत्। स ईक्षाचक्रे इदं सृजेयम्" (महोपनिषत्) इत्यादिना॥

एवं च वायुसंपर्कशून्यतादशायां निश्चलतया वर्तमानः समुद्रः कदाचित् वायुसंपर्कवशात् प्रथमं यथा किञ्चिचलितो भवति तथा परमात्मनः इच्छावशात् किञ्चिदिव विक्रिया भवति । एतादृशविकारविशेष एव विमर्शशक्तिरित्युच्यते ॥

यथा चन्द्रे स्थिरा ज्योत्स्ना विश्ववस्तुप्रकाशिनी ।
तथा शक्तिर्विमर्शाख्या प्रकाशे ब्रह्मणि स्थिरा ॥ (20–32)

इति सिद्धान्तशिखामणिः चन्द्रचन्द्रिकावत् ब्रह्मशक्त्योः नित्यत्वं उपपादयति । प्रलयकाले परमात्मविलीना शक्तिः सिसृक्षासमये तदिच्छानुसारेण विश्वविकासोद्युक्ता भवति । "न शिवेन विना शक्तिः न शक्तिरहितः शिव," (वी-चं,73)इति शिवशक्त्योः पृथगवस्थानं न शक्यते । भेदाभेदात्मिका शक्तिः ब्रह्मनिष्ठा सनातनी" (वी-चं,73) इति स्मृतौ शक्तेः वह्निशक्तेरिव ब्रह्माधिष्ठानत्वं उपदिश्यते । निरधिष्ठानशक्तेरभावात्, शक्तिशक्तिमतोरभेदाच्च तत्कर्तृत्वं तदात्मकत्वं तस्यैवोपपद्यते ॥

"We cannot distinguish energy from that which possesses it. The Brahman may be regarded both as energy and as the repository of all energies. There cannot be any energy without there being a substance. So the Brahman works in a duel capacity as substance and as energy." (Dasgupta's H g ph vot.V. P. 181)

एवं दासगुप्तमहाशयः शक्तिशक्तिमतोः नित्यसबद्धता सम्यगुपपादयति ॥

प्रलयावस्थाया हि परमात्मा ज्ञानज्ञेयज्ञातृभावशून्यः केवलस्वरूपप्रकाशमात्रावशेषः निर्विकल्पः कूटस्थः उदासीनासङ्गस्वरूपः तूष्णीं अस्ते । न हि तदानीं परमात्मनः अहमिति अभिमर्शस्य प्रशक्तिः । अहमित्यभिमर्शो हि यत्किञ्चित्कर्तृतारूपः । कर्तृत्वं च करणविषयादिसापेक्षम् । "अहं इदं जानामि' 'अहमिदं करोमि' इत्यादौ हि अहमभिमर्शः यत्किञ्चित्कर्तृतारूप एव दृष्टः ।

प्रमाणप्रमेयादिसर्वविकल्पशून्यायां प्रलयावस्थायां परमात्मनः कथं वा अह-मित्यादिविमर्शः स्यात् । अतः तदानीं विमर्शशून्यस्य अहमिदं सृजेयम् इति इच्छाया एव प्रथमविमर्शरूपत्वात् *सेयं प्राथमिकी इच्छा विमर्शशक्तिः भवति* । अत्र च परमात्मनः निरङ्कुशं स्वातन्त्र्यमेव मूलम् ॥

पूर्वं परमात्मनि लीनायाः असत्कल्पाया एव शक्तेः इयं इच्छैव प्रथमः आकारः । यतः लीना सैव शक्तिः इच्छाकारं भजते । इदानीं च ब्रह्मशक्त्योः भेदव्यवहारः उपक्रान्तः । तत्पूर्वं च अभेद एव, भेदस्य अनुपलब्धेः । अत एवं शक्तेः भेदाभेदात्मकत्वं अस्मिन् दर्शने निर्दिश्यते । सैव शक्तिः परमात्म-प्रेरिता परमात्माविष्टा सती परिणमितुं उपक्रान्ता ॥

शक्तिविशिष्टब्रह्मणः षट्त्रिंशत्तत्त्वात्मना परिणामः क्रमेण निर्दिश्यते– "शिवः, शक्तिः, सदाशिवः, ईश्वरः, शुद्धविद्या, माया, कला, विद्या, रागः, कालः, नियतिः, पुरुषः, प्रकृतिः, महान्, अहङ्कारः, मनः, श्रोत्रम्, त्वक्, चक्षुः, जिह्वा, घ्राणम्, वाक्, पाणिः, पादः, पायुः, उपस्थः, शब्दः, स्पर्शः, रूपं, रसः, गन्धः, आकाशः, वायुः, अग्निः, जलं, पृथिवी, ॥

### (आ) षट्त्रिंशत्तत्त्वानां स्वरूपपरिचयः

इदमत्र प्रथममवधेयम् । एतत्षट्त्रिंशत्तत्त्वानां मूलभूतं यद्वस्तु वर्तते तदेव परं ब्रह्म इत्युच्यते । तत्तु केवलसच्चिदानन्दस्वरूपम् । एतदतिरिक्तस्य कस्याप्याकारस्य तत्र अभावात् निर्विकल्पं निराकारं प्रपञ्चातीतं च तत् । यतः प्रपञ्चातीतं अत एव व्यावहारिकपदार्थेषु षट्त्रिंशत्तत्त्वेषु न तस्य-गणना । सर्वाधिष्ठानभूतं तदेव परब्रह्म वीरशैवसंप्रदाये, **परमशिव लिङ्ग-स्थलादिशब्दैः** व्यवह्रियते । अस्य मायातीतत्वात् वशीकृतमायाशक्तिकत्वाच्च ऊर्ध्वमायायां परमशिव इति प्रसिद्धिः । षट्त्रिंशत्तत्त्वेषु आदिभूतो यः शिवः तस्य व्यावृत्तये मूलवस्तुनि परमशब्दप्रयोगः । समस्तजगतः सृष्टिस्थितिलयानां परमाधारत्वात् परकाष्ठारूपत्वाच्च तदेव लिङ्गशब्देन व्यवह्रियते ॥

तथोक्त अनुभवसूत्रे " लीयते गम्यते यत्र येन सर्वं चराचरम् ।
तदेतल्लिङ्गमित्युक्त लिङ्गतत्त्वपरायणै ।" (3–3) इति

एव तत्रैव—"स्थकार स्थानवाची स्यात् लकारो लयवाचक ।
तयो कारणभूत यत् तदेव स्थलमुच्यते ॥ (2–5)

एव सिद्धान्तशिखामणौ—लय गच्छति यत्रैव जगदेतच्चराचरम् ।
पुन पुन समुत्पत्ति तल्लिङ्ग ब्रह्म शाश्वतम् ॥
तस्माल्लिङ्गमिति ख्यात सत्तानन्दचिदात्मकम् ।
बृहत्वाद्बृहणत्वाच्च ब्रह्मशब्दाभिधेयकम् ॥ (6–36–37)

इदमेव सर्वकर्तृ सर्वाश्रयभूत सर्वाधिगम्य च लिङ्ग मूलकारणम् । तदेव लक्ष्यमस्मिन् दर्शने । [1]"अस्थूल अनणु अह्रस्व' इति श्रुतिप्रतिपाद्य इदमेव अमूर्त चिद्रूप तदर सर्वव्यापक सत् सर्वत्र विराजते । [2]"तमेव भान्तमनु भाति सर्वं तस्य भासा सर्वमिद विभाति," इति श्रुते तस्यैव भासा सर्वमिद जगद्विभाति । तदेव सर्वाधार मुमुक्षूपास्यम् । [3]"विष्टभ्याहमिद कृत्स्न एकांशेन स्थितो जगत्" इत्येकांशेन षट्त्रिंशद्रूपतया परिणत सत् अधिकांशेन स्वानन्दे विराजमान मूलवस्तु मुमुक्षुभिराश्रयणीयतया निर्दिश्यते । "पादोऽस्य विश्वा भूतानि, त्रिपादस्यामृत दिवि' इति पुरुषसूक्ते श्रवणात् तस्य अत्यल्पांश एव सकलब्रह्माण्डकोडीकार उपपद्यते । एव अवशिष्टे अधिके भागे स स्वयमेव प्रकाशते । त्रिमूर्तयोऽपि हृदयाकाशे सदा स्वप्रकाश लिङ्ग ध्यायन्त स्वीयं कर्तव्य निर्वहन्तो वर्तन्ते । एतादृशशक्तिविशिष्टपरमात्मपरिणाम ' दासगुप्तमहाशयेन स्पष्ट एव उपपाद्यते—"Though God transforms Himself into the manifold world He does not exhaust Himself in the creation but the greater part of Him is transcendent. Thus in some aspect God is immanent, forming the stuff of the world and in another aspect, He is transcendent

[1] बृ, 5 8 8 [2] मु, 2 2-10 [3] गी, 10 42.

and far beyond the range of this world Only a part of God may be regarded as being transformed into the material world' H I Ph Vol V p 183

इत्थ दासगुप्तमहाशयेन जगतो ब्रह्मात्मकत्व सम्यग्निर्दिष्टीकृतम् । एवं शक्तिविशिष्ट ब्रह्म स्वविनोदाय स्वशक्त्यैकांशेन अनन्ताकारेण परिणतमपि अधिकांशेन स्वीयया शक्त्या सह स्वीयमानन्द अनुभवत् स्वय तूष्णीमवतिष्ठते । परब्रह्मस्वरूप वचनकारै सम्यगनुभूय निवेद्यते —

[1] "ಲಿಂಗವೆಂಬುದು ಪರಶಕ್ತಿಯುತ ಪರಶಿವನ ನಿಜ ದೇಹ ಲಿಂಗವೆಂಬುದು ಪರ ಶಿವನ ಘನತೇಜ ಲಿಂಗವೆಂಬುದು ಪರಶಿವನ ನಿರತಿಶಯಾನಂದ ಸುಖವು ಲಿಂಗವೆಂಬುದು ಪರಶಿವನ ಪರಮ ಜ್ಞಾನ ಲಿಂಗವೆಂಬುದು ಷಡಧ್ವಮಯ ಜಗಜ್ಜನ್ಮ ಭೂಮಿ ಲಿಂಗವೆಂಬುದು ಅಖಂಡಿತ ವೇದ ಪಂಚ ಸಂಜ್ಞೆ ಲಿಂಗವೆಂಬುದು ತಾ ಹರಿ ಬ್ರಹ್ಮರ ನಡುಮನೆಗಳ ಜ್ಯೋತಿರ್ಲಿಂಗ ಎಂದಿರ್ದು ಲಿಂಗದ ಮರ್ಮ, ಲಿಂಗದೊಳಿದ ತಿಳಿಯ ಬಲ್ಲವನೇ ಬಲ್ಲನು

[2] "ಲಿಂಗವೆಂಬುದು ಸರ್ವಕಾರಣ ನಿರ್ಮಲ ಲಿಂಗವೆಂಬುದು ಸಚ್ಚಿದಾನಂದ ನಿತ್ಯ ಪರಿಪೂರ್ಣ ಲಿಂಗವೆಂಬುದು ಸರ್ವಲೋಕೋತ್ಪತ್ತಿಗೆ ಕಾರಣ ಲಿಂಗವೆಂಬುದು ಸರ್ವತತ್ತ್ವ ಪೂರ್ಣ ಚೈತನ್ಯ ಲಿಂಗವೆಂಬುದು ಶರಣರ ಹೃದಯದಲ್ಲಿ ಬೆಳಗುವ ಜ್ಯೋತಿರ್ಮಯ ಲಿಂಗವು ಅಂತೀ ಲಿಂಗದ ಮರ್ಮವನರಿದವನೇ ಅರಿದವನು'

[3] ಮನದ ಕೊನೆಯ ಮೊನೆಯ ಮೇಲೆ ಬೆಳಗುವ ನಿಜ ಬೋಧಾ ರೂಪು ಲಿಂಗವು—ತಿಳಿದು ನೋಡಲು ತಾನೇ ಲಿಂಗವು

एतादृशाद्भुतशक्तिविशिष्टस्य महाप्रकाशस्य लिङ्गस्य लीलाविनोद भूमिरेव इद जगत् । एव सर्वाधिष्ठानभूत परब्रह्म भक्तानुग्रहाय मूर्तामूर्तोभय रूपेण शोभते । तत्र मूर्तरूपे शिवशक्त्यभिधानेन षट्त्रिंशत्तत्त्वेषु प्रथम निर्दिश्येते । अमूर्तमपि सत् ब्रह्म उपासनासौकर्याय मूर्त भवति । स्वस्मिन् सूक्ष्मरूपेण सङ्कोचावस्थाया विद्यमान चिदचिद्वस्तुजाल परमात्मा स्वलीलाया तत्तत्कर्मवासनानुगुण्येन बहि प्रकटयति । एतादृशजगद्रचनाकौशल माया कल्पितेश्वरे कथ सङ्घटेत ? जीवाना तादृशेश्वरे भक्तिरपि कथ सम्पद्येत ? माया

---

[1] ವ ರಾ ಸಾ P 63 [2] ವ ರಾ ಸಾ P 54 [3] ವ ರಾ ಸಾ 1 56,

शबलितेश्वरः उपासकानां कथं वरप्रदो भवेत्? अयं अंशः दासगुप्तमहाशयेन स्पष्टं उपवर्ण्यते श्रीपतिपंडिताशयविवरणवेलायाम् |H.I.P.Vol.V p.178.

"No one is justified in trusting an illusory object for showing devotion to him. Such a God would seem to have the same status as any other object of illusion. Moreover, how can an illusory God bestow benefits when he is adored and worshipped by the devotees?"

एवं शक्तिविशिष्टाद्वैतसिद्धान्तं सङ्गृह्य अभिधीयते अनेन महाशयेन स्वीयपुस्तके (184 page) "The central idea of Veerashaiva Philosophy is that God is indistinguishable from his energies just as the sun cannot be distinguished from the rays of the sun. In the original state, when there was no world, God alone existed and all the manifold world of matter and life exhisted in Him in a subtle form, wholly indistinguishable from Him. Later on, when the idea of creation moved Him, He separated the living beings and made them different and associated them with different kinds of Karma He also, manifested the material world in all the variety of forms."

एतादृशमहामहिम्नः परब्रह्मणः पूज्यपूजकभावलीलया सृष्ट्युन्मुखस्य प्राथमिको यो अभियोगः ईषच्चलनरूप स एव विमर्शशक्तिपदवाच्य इति अनुपदमेवोक्तम्। एतादृश्याः विमर्शशक्तेः आकारद्वयं ततो विक्रमति, एक आकारः अन्तरङ्गभूतः ज्ञानशब्दवाच्यः, अपरश्च बाह्यः क्रियाशब्दवाच्यः। एवं च आहत्य विमर्शशक्तेः इच्छा, ज्ञानं, क्रिया इत्याकारत्रयं उक्तं भवति। एषां त्रयाणां शक्तिपरिणामरूपत्वेन, इच्छाशक्तिः ज्ञानशक्तिः क्रियाशक्तिश्चेति शक्तिशब्दघटनयापि व्यवहारो वर्तते। तदुक्तमागमे (P.34 शि-म.) —

"अनादिनिधनात् शान्तात् शिवात् परमकारणात्।
इच्छाशक्तिर्विनिष्क्रान्ता ततो ज्ञानं ततः क्रिया।
तत्रोत्पन्नानि भूतानि भुवनानि चतुर्दश"॥ इति

अत्र 'शान्तात् परमकारणात्' इति विशेषणद्वयवशात् शिवपदं परमशिवपरं ज्ञेयम् । उत्तरार्धेन विमर्शशक्तिपरिणामविशेषा उक्ताः ॥

यद्यप्यत्र तत्त्वगणनाया 'शिवः शक्तिः' इति गणनायाः पूर्वं एतादृशशक्तित्रयस्य ग्रहणं कुतो न कृतमिति शङ्का उदेत्येव । परंतु परिणामसामान्यस्य न तत्त्वशब्देन व्यवहारः । स्वतंत्रं वस्त्वन्तरोपादानभूतं द्रव्यमेव तत्त्वशब्देन व्यवह्रियते । पूर्वोक्तशक्तित्रयमपि न स्वतंत्रं द्रव्यम्, किंतु परमशिवस्वरूपभूतमेव । शक्तिविशिष्टं खलु परं ब्रह्म । प्रलयकाले शिवे विलीना शक्तिः सृष्ट्युपक्रमे किञ्चिदिव स्फुटिता भवति । तदानीमेव शक्तिशक्तिमद्भावेन परब्रह्मणः प्रतीतिः । तत्पूर्वं तु न तथा विशेषणविशेष्यभावमवगाहमाना प्रतीतिरुदेतुं प्रभवति, शक्तेः सुसूक्ष्ममेवावस्थानात् ॥

लोकेऽपि आसीनं कञ्चन पुरुषं अनेकशः पश्यतां पुरुषाणां किमयं गमनशक्तिशून्यः इति भावना जायते । यावत्पर्यंतं सः न चलति तावत्पर्यन्तं तस्मिन् गमनशक्तिः न निर्णेतुं शक्यते । यदा च चलति तदानीमेव 'अयं गमनशक्तिमानेव' इति शक्तिज्ञानं जायते । एवं च सर्वथा अतीन्द्रियायाः शक्तेः ज्ञानं कार्यदशायामेव उदेतुं प्रभवति । तथा च प्रलयकाले परमात्मनः असङ्गोदासीनस्वभावतया तूष्णीं अवस्थानात् कार्यवर्गस्य अभावेन शक्तिज्ञानं न भवितुमर्हति । अतः तदानीं शक्तिशक्तिमत्त्वेन आधाराधेयभावावगाहिनी प्रतीतिर्न भवत्येव । पूज्यपूजकभावलीलया सृष्ट्युन्मुखावस्थायां तु सा शक्तिः बहिर्निस्सरति । तदैव च शक्तिशक्तिमत्त्वेन आधाराधेयभावावगाही प्रत्ययः उदेतुं प्रभवति । प्रलये शक्तिः न स्वतन्त्रं तत्त्वान्तरम् । किन्तु परमात्मस्वरूपभूता सा । अतः तत्त्वान्तरत्वेन तस्याः परिगणनं न क्रियते ॥

अत्रेदं ज्ञेयम् । लोकेऽपि पुरुषाणां घटादिकं चिकीर्षतां घटादिकरणे प्रवृत्तेः क्रमः एवमेव वर्ण्यते, इच्छा ज्ञानं क्रियेति । यद्यपि जानाति, इच्छति, यतते इति क्रमः नैय्यायिकैः उच्यते । तर्कसंग्रहदीपिकायां च स्वोपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमत्त्वं कर्तृत्वमिति प्रतिपादितम् । अथापि

नायं श्रौतः क्रमः । श्रुतिर्हि एवं वदति ब्रह्मणः सृष्टिक्रमम् — "सोऽकामयत, बहु स्यां प्रजायेयेति । स तपोऽतप्यत, स तपस्तप्त्वा, इदं सर्वमसृजत" इति (तै-आ-6) । अत्र सोऽकामयत इति प्रथमं इच्छा । ततः स्रष्टव्यवस्तुविषयकं परिशीलनरूपं ज्ञानं 'स तपोऽतप्यत' इत्युच्यते । 'इदं सर्वमसृजत' इति क्रिया उच्यते । एवं च 'इच्छा ज्ञानं क्रिया' इत्येव श्रौतक्रमः निष्पन्नः । लोकेऽपि हि इच्छैव सर्वमूलकारणं दृष्टम् । परन्तु सा इच्छा सद्विषयिणी चेत् संसारोच्छेदहेतुः, असद्विषयिणी चेत् संसारबन्धहेतुः ॥

एवं च इच्छा ज्ञानं क्रिया इत्येव क्रमो युक्तः । एतादृशेच्छादित्रयवत्त्व मन्तरा तत्त्वसृष्टिरेव न भवति । अतः तत्त्वसृष्ट्युपयोगिनः इमे विकाराः न पृथक् तत्त्वान्तरत्वेन परिगण्यन्ते । अहं कुर्यां, अहं जानामि, अहं सृजामि इति अभिमर्शस्य प्रलयकाले असतः आविर्भावात् इयं विमर्शशक्तिरित्युच्यते । एवं प्राथमिकेच्छाशक्त्यनन्तरं प्रवृत्तत्वात् ज्ञानक्रिययोः इच्छांशत्वेन व्यवहारः । यथा मृत्परिणामस्य घटस्य मृदंशत्वेन व्यवहारः तथा प्रकृतेऽपि । तत्र च ज्ञानं इच्छाशक्तेः अव्यवहितपरिणामरूपम् । अत इच्छाशक्तेः ज्ञानं अन्तरङ्ग-मुच्यते । किंच ज्ञानं कार्यानुमेयं अन्तर्मुखम् । अतः अन्तरङ्गशब्देनोच्यते । क्रिया तु प्रत्यक्षा । अतः सा बहिरङ्गशब्देनोच्यते ॥

## (१) शिवतत्त्वम्

एतादृशेच्छाशक्त्यन्तरङ्गभूतं ज्ञानांशानुप्रविष्टं परमात्मचैतन्यमेव शिवाभिधं तत्त्वं भवति । इदमेव सकलजगन्निमित्तकारणभूतं तत्त्वमिति संप्रदायः । इदमेव च मुमुक्षूपास्यं मूर्तं ब्रह्म । अयमेव शिवः उमापतिः नीलकण्ठः कैलासवासी गङ्गाधरः महेश्वरश्चेति पौराणिकैर्वर्ण्यते । यथा ऊर्णनाभिः तन्तुजालस्य, तथा शिवतत्त्वात्मकं परं ब्रह्म ज्ञानविशिष्टत्वाकारेण भाविप्रपञ्चनिमित्तं भवति ॥

ननु किमिदं उच्यते इदमेव मुमुक्षूपास्यं ब्रह्मेति । तर्हि परब्रह्मणः मुमुक्षूपास्यत्वं नास्ति ? इति चेत् सत्यम् । अमूर्तं परं ब्रह्म नोपासितुं शक्यम् ,

तद्धि निराकारं, निर्गुणं, निर्विकल्पं च। तत्र च इत्थंभावना न भवितुमर्हति।' इत्थंभावना हि साकारस्यैव। अतः निराकारं तन्नोपास्यमेव। अमूर्तं ब्रह्म भक्ततारणार्थं तदुपासनासौकर्याय मूर्तं भवति। 'द्वे वा व ब्रह्मणो रूपे मूर्तं चामूर्तमेव च' (बृ,4-3-1.) इति श्रुते.। अमूर्तमेव ब्रह्म मूर्तरूपः शिव इति षट्त्रिंशत्सु तत्त्वेषु आयतया परिगण्यते। अयमाशय·। 'स्नेहो भक्तिरिति प्रोक्तः तया मुक्तिर्न चान्यथा' इति शङ्करसहितावचनात् भक्तिरेव मुक्तिहेतुरित्यत्र न वीरशैवेषु विवादः। भक्तिश्च स्नेहरूपेत्युक्तम्। स्नेहश्चात्र स्वोपकारिणि स्वोत्तमे पुरुषे विद्यमाना प्रीतिरेव। पुत्रे मित्रे भार्यायां वा विद्यमानस्य स्नेहस्य भक्तिशब्देन न व्यवहारः। अत एव महनीयविषये प्रीतिः भक्तिरित्युच्यते। अयं मदपेक्षया महनीय इति ज्ञानं यस्मिन् जायते तस्मिन् भक्तिः स्वत एव उदेति। इय भक्तिरेव उपासनशब्देन उच्यते। एवं च परमात्मनि भक्त्युत्पत्तौ तस्मिन् महनीयत्वज्ञान आवश्यकम्। तच्च ज्ञानं सकलकल्याणगुणाकरे सर्वाभयप्रदातरि सर्वोपकारिण्येव जायेत। स्वस्वावस्थाया परं ब्रह्म निर्गुण निराकारं असङ्गोदासीनस्वभावं शान्त च। एतादृशस्वरूपज्ञानात् कथं तत्र भक्तिरुदेतु प्रभवति। अतः भक्त्युत्पत्तये तद्वृद्धये च निराकारं सदेव ब्रह्म स्वेच्छया पूर्वोक्तक्रमेण साकारं सकलकल्याणगुणाकरं सर्वोपकारकं सर्वाभयप्रदातृ सत् शिवतत्त्वात्मना विराजते। एतदेव उपासका उपासन्ते। परं तु उपासकाः क्रमेण कारणभूतं निष्कलं अमूर्तं चिद्रूपं महाप्रकाशं प्राप्नुवन्ति। तत्प्रकारश्च मुक्तिस्वरूपनिरूपणावसरे विचार्यते। तथा च इदं शिवतत्त्वमेव मुमुक्षूपास्यमिति युक्तमुक्तम्॥

## (२) शक्तितत्त्वम्

पूर्वोक्तेच्छाशक्तेः बहिरङ्गभूत. यः क्रियाश. तदनुप्रविष्ट परब्रह्मचैतन्यमेव शक्तितत्त्वं भवति। परमात्मनि गुणभावमापन्ना या विमर्शशक्तिर्वर्तते सैव परमात्मनो विभज्य स्वतन्त्रद्रव्यात्मना परिणता शक्तितत्त्वपदेन

व्यपदिश्यते । अत एवेयं शक्तिः द्वितीयं तत्त्वमिति षट्त्रिंशत्तत्त्वेषु परिगणिता । इयमेव परमात्मनो भोगकाले भवानीति, लोकरक्षणे विष्णुरिति, दुष्टनिग्रहे काली दुर्गेति च व्यवह्रियते । इयमेव शक्तिः भाविप्रपञ्चोपादानभूतं द्रव्यमिति संप्रदायविदः । यथा ऊर्णनाभिः जालोत्पत्तियोग्यशरीरविशेषविशिष्टत्वाकारेण जालस्य उपादानं भवति, तथा शक्त्यात्मकं परब्रह्मैव क्रियाविशिष्टत्वाकारेण भाविप्रपञ्चस्य उपादानं भवति । एवं च परब्रह्मैव प्रपञ्चस्य अभिन्ननिमित्तोपादानं कारणं संपद्यते । [1]"यथोर्णनाभिः सृजते गृह्णते च" इति मुण्डकश्रुतिः अमुं आशयं विशदयति । दासगुप्तमहाशयोऽस्मिन् विषये एवं अभिप्रैति [2]'Just as a spider weaves out of itself a whole web, so God creates out of Himself the whole world. In this way, Siva is both the instrumental and material cause'

परमात्मगुणभूतायाः शक्तेः द्रव्यभावापत्तिः कथम् ? न हि गुणो द्रव्यं भवितुमर्हति इति चेत्, शक्तिस्वरूपं पृथग्विस्तरेण विचारयितुकामा वयं तत्र सर्वामप्याशङ्कां परिहरामः । अस्या एव शक्तेः पुंभावापन्नपरिणामविशेषः नारायणशब्दवाच्यो भवतीति ईश्वरतत्त्वे वक्ष्यते ॥

## (३) सदाशिवतत्त्वम्

एवं च शक्तिरूपं द्रव्यं इच्छाशक्तिपरिणामभूतमिति उक्तं भवति । इच्छाशक्तेश्च ज्ञानमन्तरङ्गांशः इति चोक्तम् । एतादृशेच्छाशक्तिपरिणामभूतत्वात् शक्तितत्त्वस्य अत्रापि तादृशाशद्वयं अन्तर्गतं सद्वर्तते इत्यङ्गीकरणीयमेव । [illegible] उपादेये सङ्क्रान्तेः आवश्यकत्वं सर्वानुभवसिद्धं खलु ! इयं च शक्तिः स्वान्तरङ्गभूतज्ञानशक्त्युद्रेकावस्थां प्रविश्य जलाधिवासितचणकवत् पूर्वावस्थावैलक्षण्येन अङ्कुरायमाणेदन्ताप्रथमरूपं स्वाहन्तया आच्छाद्य वर्तमानविश्वस्फुरणमयेन सदाशिवरूपेण परिणमते । अस्य अवस्थाविशेष एव [illegible] इति व्यवह्रियते । रुद्रस्य सर्वज्ञत्वेन प्रसिद्ध्या ज्ञानांशत्वं अङ्गीक्रियते ॥

---

[1] मु. 1-1-7. [2] History of Ind phi vol. V. P 179

## (४) ईश्वरतत्त्वम्

इच्छाशक्तेः बहिरङ्गभूते क्रियांशे प्रविश्य सैव शक्तिः ईश्वरतत्त्वनाम्ना परिणमते। शक्तिः स्वक्रियाशक्त्युद्रेकदशां प्रविष्टा सती अङ्कुरितेदन्तारूपं स्वाहन्तया आच्छाद्य अभिव्यक्तविश्वस्फूर्तिमयेश्वररूपेण परिणमते इति निष्कर्षः। सृष्ट्युन्मुखस्य परमेश्वरस्य यः प्राथमिको विकारः स एव तदीया विमर्शाख्या शक्तिः। तदानीमेव सृष्टिरारभ्यते। जगतः अङ्कुरायमाणावस्थाया इदन्ताप्रथमरूपं संपद्यते। तदानीं जगदुपादानभूता शक्तिः वर्तमानविश्वस्फुरणरूपतया सदाशिवावस्था भजते। जगदङ्कुरितावस्थायां सैव शक्तिः समुद्भूतविश्वस्फूर्तिरूपतया ईश्वरावस्था भजते। क्षेत्रे यदा बीजं निपतति तदानीं तत् प्रागङ्कुरायते। अनन्तरं अङ्कुरितं भवति, एवं क्रमेण अङ्कुरमुपलभ्यते। एवं शक्तिबीजेऽपि तादृशा विकाराः संभाव्यन्ते। हृदये सृष्टिक्रमालोचनावसरे ज्ञानप्राधान्येन या शक्तिः सदाशिवावस्था भजते सैव शक्तिः विचिन्तितक्रमेण कार्यं साधयितुं क्रियाप्राधान्येन ईश्वरावस्था भजते। सृष्टिक्रमे एतद्द्वयः अवस्थाः सर्वानुभवसिद्धा। एवं च शक्त्यवस्थाविशेषावेव रुद्रविष्णू इत्यवगम्यते। यतः सदाशिवावस्थाविशेषो रुद्रः इति प्रागेव सूचितम्। ईश्वरावस्थाविशेष एव नारायण इति अभिधीयते। शक्तिपुंभावविकास एव नारायणः, [1] 'एषैव शक्तिः परमेश्वरस्य' इति स्मरणात्॥

## (५) शुद्धविद्यातत्त्वम्

एवं सदाशिवेश्वरावस्थानन्तरं शक्तिः शुद्धविद्यारूपतया परिणमते। तस्यामेव दशायां 'अहमेवेदं जगत्' इति अभिमर्शः उत्पद्यते। इदानीं क्रियाप्रधानेदन्तायाः ज्ञानप्रधानाहन्तायाश्च सागरतरङ्गन्यायेन ऐक्यप्रतिपत्तिः सञ्जायते। इयमेव शुद्धविद्यावस्था। क्रियाप्रधानेदन्तायाः ज्ञानप्रधानाहन्तान्तर्गतत्वेन विभागनिबन्धनभेदघटितसागरतरङ्गन्यायेन अहन्तेदन्तयोः

[1] श्रीकरभाष्य p. 68.

ऐक्यप्रतिपत्त्या शक्तिः शुद्धविद्या भवति। गुरूपदेशलब्धा शास्त्रज्ञानजन्या च निर्मला संवित् शुद्धविद्येत्युच्यते। अस्याः परिणामविशेष एव चतुर्मुख-ब्रह्मेत्युच्यते। ब्रह्मा हि जगत्स्रष्टा। सृष्टिश्च ज्ञानक्रियारूपा। अत इयं शुद्धविद्या चतुर्मुखस्य मूलकारणमिति युक्तम्। एवं च सागरस्य तरङ्गाणां जलमयत्वात् यथा अभेदः तथा अहं इदं सर्वमिति अहन्तायाः प्रपञ्चस्य च यो अभेदः तज्ज्ञानं शुद्धविद्यया सम्पद्यते॥

## (६) मायातत्त्वम्

एतत्पर्यन्तं प्रतिपादितानि पञ्चतत्त्वानि शिवांशबाहुल्यात् शुद्धतत्त्वानि इति कथ्यन्ते। ततः शुद्धाशुद्धानि सप्ततत्त्वानि निरूप्यन्ते—माया, कला, विद्या, रागः, कालः, नियतिः, पुरुषः इति। मयूराण्डरसे यथा भाविपादपक्ष-वर्णवैचित्र्यादयः सूक्ष्मरूपेण विद्यन्ते, तथा शुद्धविद्याया भाविप्रपञ्चनिर्माण-सामग्र्यः सूक्ष्मरूपेण अवतिष्ठन्ते। सैव शुद्धविद्या परस्परं भेदबुद्धि-प्राधान्येन मायेति व्यवह्रियते। अहन्तेदन्तयोः या अभेदबुद्धिः शुद्धविद्येति व्यवह्रियते सैव भेदबुद्ध्या मायेति कथ्यते। एवं च भाविप्रपञ्चनिर्माणकारणी-भूतसूक्ष्मपदार्थेषु अन्योन्याभावरूपभेदबुद्धिप्राधान्येन शुद्धविद्यैव मायावस्था भजते। अतो माया नाम मयूराण्डरसवत् भाविप्रपञ्चसृष्ट्यनुगुणविचित्रानन्त-शक्तिगर्भः शुद्धविद्यापरिणामः। इयं च परमात्मनोंऽशे जीवे 'नाहमीश्वः' इत्यादिभ्रमहेतुर्भवति। इयं च मायाशक्तिः बहुविधा विश्ववैचित्र्यकारिणी। अभेदप्रधाना शुद्धविद्यैव मयूराण्डरसन्यायेन स्वान्तर्लीनेषु भवनक्रियोन्मुखेषु वस्तुषु भेदबुद्ध्युत्पादनेन मायेत्यभिधीयते। एवं अभेदेऽपि भेदबुद्धिमापाद-यन्त्याः मायायाः चातुर्यं किमु वक्तव्यम्। अस्या एव मायाशक्तेः प्रभावेन शुद्धो जीवः संसारी संवृत्तः॥

## (७-११) कलादिपञ्चतत्त्वानि

प्रपञ्चनाटकेऽस्मिन् जीव एव प्रधानपात्रं निर्वहति। जीवश्च परमात्म-नोंऽश इति अनुपदं वक्ष्यते। परमात्मा हि सर्वकर्ता, सर्वज्ञः, परिपूर्णः, नित्यो विभुश्च। एतादृशपरमात्मनः अंशोऽपि सन् जीवः तत्प्रत्यनीकतया स्वस्मिन्

परमात्मभेदरूपं--किञ्चिद्ज्ञत्वं, किञ्चित्कर्तृत्वं, अपरिपूर्णत्वं, अनित्यत्वं, अणुत्वं च परिकल्प्य संसारदुःखभाग्भवति । अतः कला, विद्या, रागः, कालः, नियतिश्च जीवावारकत्वेन परिकल्पितानि जीवस्य बन्धकानि । एवं सर्वकर्तृत्वादि-प्रतिकोटिभूतानां किञ्चित्कर्तृत्वादीनां यथासंख्यं कलादिपञ्चतत्त्वानि कारणानि भवन्ति ॥

## (१२) पुरुषतत्त्वं, कलादिभिस्तदावरणञ्च

परमात्मन इच्छया आविर्भवन् तदंश एव मायायां प्रविश्य पुरुषो भवति । चेतनाचेतनात्मकं सर्वं इदं जगत् पूर्वं प्रलये परमेश्वरे वासनारूपेण अवर्तत । स्वान्तर्लीनचराचरात् परमेश्वरात्, काष्ठयोगेन वह्नेः विस्फुलिङ्गवत्, तदिच्छाशक्तिवशात् विभक्तस्सन्, मायाशक्तौ प्रतिबिम्बगत्या प्रविष्टः न्यूनप्रकाशः पुरुष इत्युच्यते । अतःसंकुचितप्रकाशः पराधीनः न्यूनशक्तिकोऽयं पुरुषः महेश्वराद्विच्छिन्नत्वेन 'नाहमीश्वर' इत्यात्मनि चिद्रूपे अनात्मभावं अरोपयति । तथैव अनात्मनि देहे आत्मताबुद्धिं परिकल्पयति । एतद्द्वयं आणवं मलम् । तत एव शुभाशुभवासनादूषितकार्ममलं प्राप्नोति । तदानीं अन्योन्याभावभेदलक्षणं मायिकं मलं च प्राप्तं भवति । एवंविधमलत्रयावृतत्वात् अयं पुरुषः **संसारी**त्युच्यते । अस्य पुरुषस्य महेश्वराद्विभक्तत्वेन मायापहृतैश्वर्यत्वात् शक्तिसङ्कोचः सहजतया समुन्मिषति । पारमेश्वरीया असङ्कुचित-कर्तृताशक्तिः किञ्चित्कर्तृतारूपं भजते । सर्वज्ञताशक्तिः किञ्चिज्ज्ञतारूपं प्राप्नोति । पूर्णताशक्तिः अपूर्णतां प्राप्य स्रक्चन्दनवनितादिविषयासक्तिरूपा भवति । नित्यता हि अनित्यतां प्राप्य सङ्कोचमापन्नः कालरूपेण पुरुषं निबध्नाति । पारमेश्वरीया व्यापकताशक्तिः विकारं परित्यज्य नियतिरूपेण पुरुषं आवृणोति । एवं **कला विद्या रागः कालो नियतिश्च** जीवस्वरूपा-वरणहेतुत्वात् **कञ्चुकानी**त्यागमेषु उच्यन्ते । अत एव एतानि पुरुषस्य बन्धकानि । अयमेव बन्धः मलः पाशः संसार इत्यादिशब्दैः व्यवह्रियते । सोऽपि बन्धः स्वाभाविकः, न त्वागन्तुकः औपाधिको वा । एतादृशमलावृतो

जीवः संसारीति व्यपदिश्यते । एवं परमात्मांऽशभूतस्य स्वतः सर्वशक्तस्यापि जीवस्य सर्वशक्तिफलरूपसर्वकर्तृत्वप्रतिकोटिभूतकिञ्चित्कर्तृताहेतुभूतं तत्त्वं कलेत्युच्यते । स्वतः सर्वज्ञस्य जीवस्य किञ्चिज्ज्ञतापादकं तत्त्वं विद्या । इयं हि विद्या सर्वज्ञताविरोधिनी । सर्वज्ञताशक्तिसङ्कोचहेतुभूतं तत्त्वं एव विद्याशब्देनोच्यते । स्वतः परिपूर्णस्यापि जीवस्य स्वस्मिन् अपरिपूर्णताहेतुभूतं तत्त्वं राग इत्युच्यते । स्वतो नित्यस्य तत्प्रत्यनीकानित्यताहेतुभूतं तत्त्वं कालतत्त्वं भवति । स्वतो व्यापकस्य जीवस्य अव्यापकताप्रयोजकं तत्त्वं नियतितत्त्वं संपद्यते ॥

एवं मायाशक्तिसंबन्धवशात् न्यूनीभूतः परमात्मचैतन्यप्रकाशः जीवभावं अनुभवति । "अनाद्यविद्यासंबन्धात् तदंशो जीवनामकः" इति **सिद्धान्तशिखामणौ** (5-52)उक्तम् । तत्र च अविद्यापदेन मायैव विवक्षिता । मायाविद्यादिपदानां पर्यायतया बहुलं प्रयोगो दृश्यते । एवं च मायातत्त्वप्रविष्टं परमात्मचैतन्यमेव जीवशब्देनोच्यते इति सिद्धम् ॥

नन्वेवं सति औपाधिक एव ब्रह्मणो जीवभावः इत्युक्तं भवति । एवं सति जीवपरयोः भेदोऽपि स्वाभाविक इति कथम्? इति चेत् एतत्तत्त्वं जीवस्वरूपविचारे स्पष्टीभविष्यति । प्रकृते तत्त्वानां सङ्ग्रहपरिचयमात्रं क्रियते । विचारस्तु पश्चात् । ब्रह्मैव तु जीवभावमनुभवतीति तु सिद्धान्तः

## (१३) प्रकृतितत्त्वम्

एतावता चेतनाचेतनात्मकप्रपञ्चसृष्टेः प्रधानकारणभूतः पुरुषतत्त्वपदवाच्यः चेतनः, शक्तितत्त्वपदवाच्यं उपादानभूतं अचेतनं च सिद्धं भवति । अथ विश्वसृष्टिर्वक्तव्या । विश्वं च सुखदुःखमोहात्मकं दृष्टम् । अतः तदुपादानभूतमपि द्रव्यं सुखदुःखमोहात्मकमेव वक्तव्यम् । एतावता प्रतिपादितानि तत्त्वानि त्रिगुणातीतान्युच्यन्ते । एवं त्रिगुणातीतानां द्वादशतत्त्वानां त्रिगुणात्मकस्य प्रपञ्चस्य च सङ्घटकं द्रव्यमेव प्रकृतितत्त्वमित्युच्यते । अत एव प्रकृतितत्त्वं सुखदुःखमोहात्मकमिति सिद्धम् । कार्योन्मुखा इच्छाशक्तिः परिस्फुरणतया स्वगतज्ञानक्रियान्योन्याभावरूपायां मायाशक्तौ प्रविश्य सत्व-

रजस्तमोगुणसाम्यावस्थारूपिणी प्रकृतिर्भवति। अस्या एव प्रधानमित्यपरं अभिधेयम्, जगद्रचनायां प्राधान्येन उपयुक्तत्वात्। इयं च प्रकृतिः बुद्ध्यादिभूम्यन्तत्रयोविंशतितत्वानां मूलकारणं भवति। इयमेव प्रकृतिः शक्तिविशिष्टाद्वैतदर्शने चित्तमिति व्यवह्रियते। एतादृशचित्तशक्तिविशिष्टः शिवांशो जीवः॥

इदमत्रविवेचनीयम्। 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' (श्वे. 4–10) इति श्रुतौ मायायाः प्रकृतित्वं उक्तं। प्रकृष्टा कृतिः प्रकृतिः इतिव्युत्पत्त्या अघटितघटनापटुतरा कर्तृस्वभावभूता क्रियाशक्तिः कथ्यते। एतादृशमायाशक्तिविशिष्टो महेश्वरो मायीत्युच्यते। 'तस्यावयवभूतेन व्याप्तमेतच्चराचरम्' एवंभूतस्य तस्य मायिकमहेश्वरस्य अवयवभूतेन अंशावताररूपेण नारायणेन जगत्सर्वं व्याप्तमिति अवगम्यते। 'श्रोत्रं च श्रोतव्यं च नारायणः' इति श्रुतेश्च स्वापेक्षया भाविविश्वोपादानकारणं नारायण एवेति विमर्शशक्त्यंशत्वं अवगम्यते॥

ननु सुखदुःखमोहात्मकजगतः उपादानभूतं द्रव्यं सुखदुःखमोहात्मकमेव वक्तव्यं चेत् सर्वप्रपञ्चमुख्योपादानभूतपरमात्मनोऽपि सुखदुःखमोहात्मकत्वमेव अङ्गीकरणीयमिति चेत् अत्र वक्तव्यं सर्वं शक्तिस्वरूपनिरूपणावसरे वक्ष्यामः। तत्र सुखं सत्त्वगुणस्य, दुःखं रजोगुणस्य, मोहः तमोगुणस्य च कृत्यम्। एतत्सर्वं सांख्यतत्त्वोक्तप्रक्रिययैव ज्ञेयम्। एवंच सत्त्वरजस्तमसां साम्यावस्थापन्नं द्रव्यमेव प्रकृतितत्त्वम्। परं तु अयं विशेषः। साम्यावस्थं गुणत्रयमेव प्रकृतिरिति सांख्याः। सिद्धान्ते तु तादृशगुणत्रयाश्रयभूतं द्रव्यं प्रकृतिशब्देनोच्यते। तथोक्तं श्रीकरभाष्ये रचनानुपपत्त्यधिकरणे—'सत्त्वादयो द्रव्यधर्माः, नतु द्रव्यस्वरूपम्। सत्त्वादयो हि पृथिव्यादिद्रव्यगतलघुत्वप्रकाशादिहेतुभूताः तत्स्वभावविशेषा एव। नतु मृद्धिरण्यादिवत् द्रव्यतया कार्यान्विता उपलभ्यन्ते। गुणा इत्येवच सत्वादीनां प्रसिद्धिः इति (पु.212)

## (१४-३६) महदादीनि तत्त्वानि॥

प्रकृतितत्त्वादारभ्य चतुर्विंशतितत्त्वानि इतरेषामपि वेदान्तिनां सम्मतानि। अतो विशिष्य वक्तव्यं नावशिष्यते। प्रकृतितत्परिणामभूतानि चतु-

विंशतिः, पूर्वं उक्तानि द्वादश आहत्य षट्त्रिंशत्तत्त्वानि । तत्र अध्यवसाय-हेतुभूतं तत्त्वं महत् । इदमित्थं इतिनिश्चयहेतुत्वात् अस्य बुद्धिरिति नाम । अभिमानहेतुभूतं तत्त्वं अहङ्कारः । सङ्कल्पहेतुभूतं तत्त्वं मनः । श्रोत्रत्वक्चक्षुस्स्पर्शनघ्राणेन्द्रियाणि पञ्च ज्ञानेन्द्रियाणि। वाक्पाणिपादपायूपस्थानि पञ्च कर्मेन्द्रियाणि । शब्दस्पर्शरूपरसगन्धतन्मात्राणि पञ्च तन्मात्राणि । आकाशवायुतेजोजलपृथिव्यः पञ्चभूतानि च । एतत्तत्त्वानां उत्पत्तिक्रमस्तु सांख्यापेक्षया वेदान्तिनां भिद्यत एव ॥

सांख्यास्तु एवं वदंति । अभिमानहेतुभूतं यदहङ्करतत्त्वं तदेतत् त्रिगुणात्मकत्वात् सात्विकाहङ्कारराजसाहङ्कारतामसाहङ्कारभेदात् त्रिविधम् । तत्र सात्विकाहङ्कारः वैकारिकशब्देन, राजसाहङ्कारः तैजसशब्देन, तामसाहङ्कारो भूतादिशब्देन व्यवह्रियते । तत्र सात्विकाहङ्कारात् मनःप्रभृतीनि एकादशेन्द्रियाणि उत्पद्यन्ते । तामसाहङ्कारात् पञ्चतन्मात्राणि उत्पद्यन्ते । राजसाहङ्कारस्तु उभयसहकारिभूतः । पञ्चतन्मात्रेभ्यः युगपदेव पञ्चभूतानि उत्पद्यन्ते इति ॥

सिद्धान्ते तु भूतोत्पत्तौ परं विशेषः । तामसाहङ्कारात् शब्दतन्मात्रं, तत आकाशः ततः स्पर्शतन्मात्रं, ततो वायुः, ततो रूपतन्मात्रं, ततः तेजः, ततो रसतन्मात्रं, ततो जलं, ततो गन्धतन्मात्रं, ततःपृथिवी इति क्रमः । अत्र प्रमाणं तु "आकाशाद्वायुः, वायोरग्निः, अग्नेरापः, अद्भ्यः पृथिवी, (तै.आ. ।)' इत्यादिश्रुतिरेव । अत्र हि क्रमिकोत्पत्तिरेव उच्यन्ते । युक्तं चैतत् । कथमन्यथा पञ्चभूतेषु उत्तरोत्तरतः एकैकगुणवृद्धिः । आकाशे शब्द एक एव गुणः, वायौ शब्दस्पर्शौ, तेजसि शब्दस्पर्शरूपाणि, जले शब्दस्पर्शरूपरसाः, पृथिव्यां शब्दस्पर्शरूपरसगन्धाः इति हि गुणोपलब्धिः । तदेतत् क्रमसृष्टावेव उपपद्यते । यद्यपि श्रुतौ तन्मात्राणि कण्ठत अनुक्तानि, तथापि उत्तरत्र एकैकगुणवृध्यन्यथानुपपत्त्यैव मध्ये मध्ये तन्मात्राणां सिद्धिरवर्जनीया ॥

## षष्ठोऽध्यायः

### परब्रह्मस्वरूपम्

एवं तत्त्वानां स्वरूपं संक्षेपतः कथितम्। अथैतेषु विशिष्य ज्ञातव्यानां तत्त्वानां स्वरूपलक्षणादिकं विचारयामः ॥

'उपयुक्तेषु वैशद्यं त्रिवर्गनिरपेक्षता।
करणत्रयसारूप्यं इति सौख्यरसायनम् ॥'

इति हि अभियुक्ता वदन्ति। काकदन्तपरीक्षावत् प्रयोजनशून्यतत्त्वविचारणेन किं वा फलम्? अतः अवश्यज्ञातव्येषु विषयेषु वैशद्यं आवश्यकम्। अवश्यज्ञातव्या विषयाश्च इमे—ब्रह्मणः स्वरूपं किम्? जीवस्य स्वरूपं किम्? फलं च किम्? तत्प्राप्त्युपायः कः? एतत्प्राप्तिविरोधि किम्? इति एवं पञ्च विषयाः प्रधानतया परिशीलनीयाः, उपयुक्तत्वात् ॥

श्रीवैष्णवसंप्रदाये एते अर्थपञ्चकशब्देन व्यपदिश्यन्ते। एतादृशार्थपञ्चकज्ञानमेव अवश्यसपायमिति च वदन्ति ते। युक्तं चैतत्। एतत्पञ्चकस्वरूपज्ञाने मानवजीवनस्य लक्ष्यनिष्कर्षो भवेदेव। अतो वयमपि पूर्वोक्तानां तत्त्वानां स्वरूपं विस्तरेण विचारयामः ॥

तत्र प्रथमं ब्रह्मणः स्वरूपं विचार्यते। सृष्टिक्रमनिरूपणावसरे ब्रह्मणः स्वरूपं सामान्यतो निरूपितम्। तत्र ब्रह्म सकलनिष्कलभेदेन, सगुणनिर्गुणभेदेन, मूर्तामूर्तभेदेन च द्विप्रकारं वर्तते। तत्र यत् वाङ्मनसागोचरं, उपासितुं ध्यातुं वा अशक्यं तत् निष्कलं निराकारं निर्गुणं इत्यादिशब्दैर्व्यवह्रियते। एतच्च परतत्त्वं षट्त्रिंशत्तत्त्वातीतं तदधिष्ठानभूतं चेति पूर्वमेवोक्तम्। उपासकानां अनुग्रहाय यत् आकारपरिग्रहं कृत्वा अवतिष्ठते तदेव सकलं, साकारं सगुणमिति चोच्यते ॥

सृष्टेः पूर्वं महादेवः शक्तिसंकोचहेतुना।
निर्गुणत्वेन शास्त्रेषु गीयते तत्त्ववेदिभिः ॥

अथ सत्त्वादिवैशिष्ट्यात् सगुणत्वं सदाशिवे ।
तत्साक्षित्वात् स्वचिच्छक्त्या निर्गुणत्वं विधीयते ॥
सकलो निष्कलश्चेति तस्मात् वेदेषु गीयते ॥
मूर्तामूर्तस्वरूपेण यथा वायुर्विराजते ।
सदाशिवस्तथा भाति सर्वानुग्रहकारक ॥
मुर्तामूर्तजगद्रूपा यथा माया तथा शिवः ।
मुर्तामूर्तस्वरूप स्यात् इति वेदान्तडिण्डिमः ॥
एतद्वेदान्तहृदयं अज्ञात्वा मोहिताः परे ।
श्रुतेरपार्थं कुर्वन्ति लोके पण्डितमानिन. ॥

इत्याद्यागमोक्तिभि सगुणनिर्गुणस्वरूपं श्रीपतिपण्डितैर्विवृतम् (श्रीकर-भाष्य P 135) । तत्र निराकार ब्रह्म सिद्धान्तशिखामणौ—

"अस्ति सच्चिरसुखाकार अलक्षणपदास्पदम् ।
निर्विकल्पं निराकार" (2–3) इत्याद्यारभ्य—
स्वात्मलीनजगत्सर्वं स्वप्राकाश्य तदद्भुतम् ॥ (2–7)
इत्येवमन्तेन वर्णितम् ॥ साकारं च ब्रह्म तत्रैव—
शिवाभिधं परं ब्रह्म जगन्निर्मातुमिच्छया ।
स्वरूपमादधे किञ्चित् सुखस्फूर्तिनिजृंभितम् ।
इत्याद्यारभ्य, अप्राकृतगुणाधारमनन्तमहिमास्पदम् ॥ (8–11)
इत्येवमन्तेन वर्णितम् ॥

अयमाशय दासगुप्तमहोदयेनैवं अनूद्यते :—

"According to the view of Shankara, the Brahma is formless. Such a view does not suit the position of Veerashaivism. Hence Sreepathi emphasises the fact that Siva exists in two status, as the formless and as being endowed with form. It is the business of the

devotee to realise that Siva is one identical being in and through all His forms and His formless aspect."

(Das. H.I.P, Vol. V, p. 187.)

अमूर्तं परब्रह्म विमर्शशक्तिरूपोर्ध्वमायान्वितं निरस्ताशेषविप्लवं सीमातीतवैभवं प्रत्यक्षादिप्रमाणागोचरं स्वप्रकाशं पराकाशस्वरूपं उपमातीतं जननमरणादिदोषरहितं सकलचराचरप्रपञ्चव्यापकं नानाविधशक्तिसमन्वितं निरङ्कुशं सनातनं अद्वितीयं शिवरुद्रमहादेवभवादिनामभिः प्रकाशते। इदमेव निराकारं ब्रह्म अनन्तमहिमास्पदं कोटिसूर्यसमप्रकाशं चंद्रकोटिसमप्रभं ब्रह्मादिगुणमूर्तिभिरुपास्यं शुद्धज्ञानकारणीभूतं सत् जगन्निर्मातुं इच्छया सुखस्फूर्तिविजृम्भितं किञ्चित्स्वरूपं स्वीचकार। अयमेव साकारः त्रिलोचनचन्द्रशेखरादिनामभिः व्यवहार्यः शिवः कैलासवासी॥

"स शंभुर्भगवान् देवः सर्वज्ञः सर्वशक्तिकः। भक्तानुग्रहाय दिव्यं मूर्तरूपं समाश्रितः" इत्यादिसिद्धान्तशिखामणौ (2–14) कथितदिशा विश्वनायको महादेवः जगत्सिसृक्षुः प्रथमं ब्रह्माणं विधाय तस्य सकला विद्याः सानुग्रहं उपादिशत्। ततो विश्वसृष्टिः प्रादुरभूत्। समस्तलोकनिर्माणसमुद्योगपरस्य शंभोः लीलाविनोदरूपोऽयं प्रपञ्चः तत्प्रसादभावनया मुमुक्षुभिरनुभूयते। शिवागमेषु ब्रह्मस्वरूपं एवं प्रदर्श्यते—

घनलिङ्गं महाभासं सच्चिदानन्दलक्षणम्।
निष्कलं निष्क्रियं शान्तं स्वतंत्रं स्वप्रकाशि तत्॥
सर्वेषां स्थानभूतत्वात् लयभूतत्वतस्तथा।
तत्त्वानां महदादीनां स्थलमित्यभिधीयते॥
स्थाणौ सर्वाश्रयेऽनन्ते सच्चिदानन्दरूपिणि।
यस्मिन् ब्रह्मणि लीयेत प्रपञ्चस्तत्स्थलं स्मृतम्॥ (श्रीक.भा. 195.)

एतादृशं अमूर्तं घनलिङ्गं स्वशक्त्येकांशेन विविधानि रूपाणि परिगृह्णाति; "स एकाकी नारमत, स द्वितीयमैच्छत्, स एतावानास"; (मद्दो) "तत्सृष्ट्वा,

तदेवानुप्राविशत्, तदनुप्रविश्य, सच्च त्यच्चाभवत्"(तै आ.)इति श्रुते, "लोकवत्तु लीलाकैवल्य" इति ब्रह्मसूत्रस्मृतेश्च । स्वक्रीडार्थं विश्वभवननिर्माणे स्वातिरिक्तकारणान्तरनैरपेक्ष्येण प्रवर्तते परमात्मा स्वशक्तिमहिम्नैव ॥,

ईप्सितार्थप्रदचिन्तामणिरिव परमशिव स्वेच्छाशक्तिरूपापोहनटङ्कवशात् स्वविमर्शशक्तिक्रोडीकृत विश्व शिवादिभूम्यन्तषट्त्रिंशत्तत्त्वात्मना विचित्रीकृत्य, सृष्टिस्थितिसहारतिरोभावानुग्रहपञ्चकृत्यमहानाट्यरसिक सन् क्रीडते । इममेवाशय अभियुक्ता आगमेष्वेव वर्णयन्ति — (श्रीक भा 203 )

शक्त्यप्रमृत्पिण्डमुपाददानः मायाण्डचक्रभ्रमणक्रमेण ।
मूलाण्डदण्डेन मुहुर्विधत्ते ब्रह्माण्डभाण्ड भगवान् कुलाल ॥

एव परमात्मा स्वीया इच्छाशक्तिमेव उपादान कृत्वा, तत्परिणामभूता प्रकृति दण्ड कृत्वा अखण्डब्रह्माण्डभाण्डान् विरचयन् वर्तते ॥

शिव एव हि देवोऽन्तस्थितमिच्छावशाद्बहि ।
योगीव निरुपादानं अर्थजाल प्रकाशयेत् ॥

योगसिद्ध पुरुष स्वयोगमहिम्ना बाह्यकारणसामग्र्यनपेक्ष्यैव केवलेच्छामात्रेण सकलेष्टार्थान् यथा सृजति तथा परब्रह्म स्वस्मिन् अव्यक्तरूपेणावस्थित जगत् तत्तत्कर्मानुसारेण व्यक्तरूपता आनाय्य तत्सृष्टेषु सर्वेषु वस्तुषु सचिद्रूपेण बहुभवनकामनया अनुप्रविशति । एव च परमात्मा अचिद्वस्तुषु सद्रूपेण, चिद्वस्तुषु सच्चिद्रूपेण निरञ्जनतया साक्षिरूपेण विराजते । तत्साक्षात्कारेण आनन्दानुभव सच्चिद्रूपो जीव समधिगच्छति । अयमश दासगुप्त महाशयेनैव उपवर्ण्यते—

The formless Shiva is considered as having form only for the advantage of meditation, yet He remains the same unchangeable reality before the creation and at the dissolution of the creation He manifests Himself in different categaries and yet remains absolutely undisturbed and unchanged Though the world has

been created and maintained by the Supreme Lord, yet people do not know Him under the delusion of Maya"
(Das. H I.P, Vol. V p. 178)

"While discussing the nature of Brahman, Sripathi says that whenever the scriptural texts describe Brahman as differenceless and qualityless, that always refers to the period *before the creation*. It is Siva, the differenceless unity, that expands His energy and creates the world and makes it appear as it is, though He always remains the ultimate substratum" (p.177-78.)

"It is only when the powers of God are in a contractive form before the creation, that God can be spoken of as being devoid of qualities, and as the result of His being engaged in the work of creation, His powers seem to manifest." (Ibid p. 179) एवं शक्तिसंकोचेन सृष्टेः प्राक् परमेश्वरस्य निर्गुणत्वं, शक्तिविकासभावेन सृष्टिसमये तदनन्तरं च सगुणत्वं अवगम्यते। निर्गुणश्रुतीनां शक्तिसंकोचकालपरत्वम्, 'स ईक्षाञ्चक्रे' इति सगुणश्रुतीनां सृष्ट्युन्मुखपरमेश्वरशक्तिविकासकालपरत्वं च उपपद्यते ॥

एवं अस्मिन् दर्शने निर्गुणब्रह्मप्रतिपादनात् अद्वैतमतसाम्यं नापादनीयम्। तन्मतीयनिर्गुणब्रह्मसगुणब्रह्मभेदस्य एतद्दर्शनसम्मतस्य च महद्वैलक्षण्यं वर्तते। तन्मते निर्गुणं निर्विशेषं च ब्रह्म। एतद्दर्शने तु परं ब्रह्म स्वस्थावस्थायां निर्गुणमपि न निर्विशेषम्। अयमर्थः—ब्रह्मणो विशेषाः द्विविधाः। ज्ञानशक्त्यादिः एकविधः, नित्यत्वविभुत्वादिश्चापरविधः। तत्राद्यवर्गस्य गुणत्वेन व्यवहारः। द्वितीयवर्गस्य धर्मत्वेन व्यवहारः। उभयोरपि इतरव्यावृत्तिनिमित्तहेतुत्वेन विशेषशब्दवाच्यत्वं समानम्। व्यावर्तकाः खलु विशेषाः। सर्वज्ञत्वादिगुणैः विभुत्वादिधर्मैश्च ब्रह्म चेतनाचेतनव्यावृत्तमवगम्यते। अतस्ते विशेषाः। तत्र आद्यो वर्गः सर्वोत्तीर्णे शान्ते ब्रह्मणि न वर्तते। सर्वज्ञत्वं नाम सर्वविषयज्ञानम्। ज्ञानेच्छाप्रयत्नादयश्च शक्तेरेवाकारविशेषा इति पूर्वमेवोक्तम्।

एवं च शान्ते ब्रह्मणि ज्ञानादिकं शक्तिरूपापन्नं वर्तते। सा च शक्तिः सूक्ष्मरूपेणैव वर्तते। शक्तेः स्थूलरूपतापत्तिश्च सृष्ट्यर्थमेव वक्तव्या। उत्तीर्णं च ब्रह्म सर्वव्यापारतोऽत्यन्तविदूरं सत् असङ्गोदासीनस्वभावम्। अतस्तत्र शक्तिव्यापृतेरावश्यकतैव नास्ति। अतस्तत्र शक्तिः कुसूलस्थबीजे अङ्कुरजननशक्तिवत् दुर्ज्ञेयैव वर्तते। कार्यादर्शनाच्च तत्स्वरूपभूता। अथापि सूक्ष्मरूपेण शक्तेरवस्थानात्, ज्ञानादिगुणाकारेण अनवस्थानात् परब्रह्म निर्गुणमित्युच्यते। न तावता निर्विशेषम्, सूक्ष्मरूपेण शक्तेः सत्त्वात्। पूर्वोक्तसिद्धांतशिखामणिवाक्ये निर्गुणब्रह्मपरे 'सर्वशक्ति' इति पदप्रयोगात् इदमवगम्यते। अयमर्थः क्रियासारादौ च स्पष्टः॥

नित्यत्वविभुत्वरूपास्तु विशेषाः ब्रह्मणि सदा वर्तन्त एव। अतः सविशेषमेव ब्रह्म। ज्ञानेच्छादिरूपविशेषशून्यत्वेन तेषामपि विशेषरूपत्वस्य पूर्वमुक्तत्वेन तदभिप्रायेण निर्विशेषमित्यपि क्वचिदुच्यते। तथाच अयं निष्कर्षः। द्विविधेषु विशेषेषु आद्यवर्गस्य अभावात् निर्विशेषमिति, द्वितीयवर्गस्य भावात् सविशेषमिति च ब्रह्म व्यवह्रियते। अद्वैतदर्शने तु सर्वविशेषशून्यमेव ब्रह्म॥

किंच साकारं सगुणं यद्ब्रह्म सिद्धान्तिभिरुच्यते न तत् मायाकल्पितं मिथ्याभूतम्, अपितु सत्यमेव। उपासकानामनुग्रहाय दयया खलु रूपपरिग्रहः। इदं "उपास्यं गुणमूर्तिभिः"[1] (२–१०) इति सिद्धान्तशिखामणिवाक्यात् स्पष्टं अवगम्यते। अद्वैतदर्शने सगुणं ब्रह्म न सत्यम्, किंतु मायाकल्पितमेवेति नानयोः साम्यप्रसक्तिः॥

इदमत्रावधेयम्। "निष्कलं निष्क्रियं" इत्यादिश्रुतेः स्वव्यतिरिक्तप्राकृतहेयकलाराहित्ये तात्पर्यम्, अन्यथा अचेतनत्वं प्रसज्येत। स्फटिकादिप्रकाशवत् निर्विमर्शत्वं च प्रसज्येत। ब्रह्मणः चेतनत्वात् सर्वाश्रयत्वाच्च जगदभिन्ननिमित्तोपादानकारणत्वं अव्याहतमेव। अद्वैतदर्शनप्रतिपाद्यनिर्विशे-

[1] श्वे 6–19.

पचिन्मात्रे ब्रह्मणि न कदाचिदपि जगज्जन्मादिहेतुत्वं संभवति, निर्विकारत्वात् निष्क्रियत्वात् निरशक्तिकत्वाच्च । तत्रारोपितमायाकल्पितशबलेश्वरस्यापि जगत्कारणत्वं आशङ्क्य निराकरोति सूत्रकारः "न प्रयोजनवत्त्वात्" इत्यनेन सूत्रेण । प्रकर्षेण योजनं प्रयोजनं, प्रयोजनं अस्यास्ति इति प्रयोजनवान्, प्रयोजनवतो भावः प्रयोजनवत्त्वं, तस्मात् प्रयोजनवत्त्वात्, प्रकर्षेण परमप्रेमास्पदत्वेन योजनं प्रयोजनं संयोजनं स्थूलसूक्ष्मकारणशरीरेषु इष्टप्राणभावसंज्ञकलिङ्गरूपेण धारणयोजनव्यपदेशात् । "अमृतस्य देवधारणो भूयासं 'शरीरं मे विचर्षणम्' 'सर्वलिङ्गं स्थापयति पाणिमंत्रे पवित्रम्' इत्यादौ भक्ततारणार्थं लिङ्गधारणं प्रतिपाद्यते । एतदेव प्रयोजनं मुमुक्षूणां परमात्माश्रयणे। 'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते' इति न्यायेन मुमुक्षूणां प्रयोजनाभावे न कोऽप्याश्रयेत परमात्मानम् । भक्तानां ऐहिकामुष्मिकफलप्रयोजनं मायाकल्पितेन ईश्वरेण कथं संपद्येत ? अयं विषयो भक्तैरेव पर्यालोच्यः ॥

यतश्चेदं परं ब्रह्म असंगोदासीनस्वभावम् अत एव जगत्कारणत्वादिकमपि साक्षादस्य नास्ति । जगत्कारणत्वादिकं तु षट्त्रिंशत्तत्त्वेषु आद्यस्य शिवरूपतत्त्वस्यैव । ननु तर्हि जन्माधिकरणे परब्रह्मण एव जगत्कारणत्वादिकं लक्षणमुक्तं कथं सङ्गच्छते इति चेत्; लक्षणं द्विविधं, स्वरूपलक्षणं तटस्थलक्षणं चेति । शुद्धब्रह्मणः स्वरूपलक्षणंतु 'सत्यंज्ञानमनन्तम्'[1] इत्यत्रोक्तं सत्यत्वज्ञानत्वानन्तत्वादिकमेव । जगत्कारणत्वादिकं तु तटस्थलक्षणमेव । शाखाग्रे चन्द्रः इत्युक्ते वस्तुतः चन्द्रे शाखाग्रवर्तित्वासंस्पर्शेऽपि शाखाग्रवर्तित्वज्ञानेन परिचायकविधया चन्द्रज्ञानवत् जगत्कारणत्वादीनां साक्षात् परब्रह्मणि असंभवेऽपि साकारब्रह्मनिष्ठं सत् जगत्कारणत्वादिकं तन्मूलरूपं निराकारमपि ब्रह्म अवगमयत्येव । अत इदं तटस्थलक्षणमित्युच्यते ॥

साकारब्रह्मणस्तु जगत्कारणत्वादिकं स्वरूपलक्षणमेव । एवमङ्गीकारेण मूलब्रह्मणो निर्विकारत्वं समर्थितं भवति । एवं लक्षणभेदः श्रीकरभाष्यक्रिया-

---

1 तै. शिक्षावल्लि.

सारादिषु स्पष्टमुपपादितः। अथैवमाशङ्क्येत— तर्हि शुद्धस्य सूक्ष्मावस्थापन्नशक्तिविशिष्टस्य परब्रह्मणः जगदुपादानत्वाद्यनङ्गीकारेण ब्रह्मोपादनतावादः कथं घटताम्? एवं शिवाभिधस्य प्रथमतत्त्वस्य जगन्निमित्तत्वे शक्त्याख्यद्वितीयतत्त्वस्य उपादानत्वे च कथिते अभिन्ननिमित्तोपादानत्वसिद्धान्तः कथं घटताम्? इति। अत्रेदं उच्यते— सर्वेषामपि तत्त्वानां ब्रह्मण एव प्रवृत्तत्वेन ब्रह्मस्वरूपं सर्वानुवृत्तं वर्तत एव। सच्चिदानन्दरूपस्य ब्रह्मणः या सद्रूपता वर्तते सा सर्वत्र जगति भासत एव। सन् घटः सन् पटः इत्याद्यनुभवो हि सर्वेषां सहजः। तत्र सर्वत्र अनुवर्तमानो यः सत्तांशः सः ब्रह्मण एव। नहि ब्रह्म विना किञ्चिद्वस्तु सत्तां अवाप्नुयात्। अयमर्थः शिवाद्वैतमञ्जरीवीरशैवानन्दचन्द्रिकादिषु (पु.23) 'सन् हृदयप्रकाशः भवनक्रिययाश्रितो भवति कर्ता। सैव क्रिया विमर्शः स्वस्था क्षुभिता च विश्वविस्तरा' इत्यादिना प्रदर्शितः। हृदये प्रकाशमानः परमेश्वरः सन्— सद्रूपेण अस्तीति व्याख्यात्रा विवरणं कृतम्। सन् हृदयप्रकाशः इति शब्दद्वयेन सदात्मकत्वं चिदात्मकत्वं च क्रोडीकृतम्। सः हृदयप्रकाश एव अस्तीति भवनक्रियाश्रयत्वात् कर्ता भवति। सैव क्रिया स्वस्था चेत्— चिदानन्दमात्रविश्रांता चेत् अस्मि प्रकाशे नन्दामि इति विमर्शो भवति। क्षुभिता चेत्— सृष्ट्युन्मुखा चेत् गोमये वृश्चिकोत्पत्तिरिव शिवादिभूम्यन्तषट्त्रिंशत्तत्त्वात्मकविचित्रविश्वस्फुरणमयी भवति। हृदयप्रकाशः, "हृदयं तद्विजानीयात् विश्वस्यायतनं महत्" इति श्रुतेः चराचरभित्तिभूतात्मप्रकाशः सन्— अस्तीत्यङ्गीकरणीयः, अन्यथा जगदान्ध्यं आपतेत्। एवं च सर्वेष्वपि तत्त्वेषु परमात्मनोऽनुवृत्त्या उत्तरावस्थाविशिष्टपरमात्मतत्वं प्रति पूर्वावस्थाविशिष्टपरमात्मतत्त्वं कारणं भवतीत्युक्तं॥

किंच सुवर्णं शलाकाद्यवस्थां प्राप्य कटकावस्थां भजते। अथापि कटकं प्रति सुवर्णमेवोपादानमिति सर्वे व्यवहरन्ति। एवं प्रकृतेऽपि ब्रह्मणः सर्वोपादानत्वे का हानिः? अयं क्रमः वीरशैवानन्दचन्द्रिकादिषु स्पष्टं उपपादितः॥

वस्तुतस्तु निमित्तत्वं नाम कार्यानुकूलसङ्कल्पाश्रयत्वम्। उपादानत्वं नाम बहुभवनानुकूलावस्थायोगित्वं। तत्र परं ब्रह्मैव जगत्सिसृक्षया किञ्चिच्चलितं

भवति। तादृशचलनमेव इच्छा। सैव विमर्शशक्तिरित्युच्यत इति असकृदुक्तम्। विमर्शशक्तिराकारश्च [1]"स ऐक्षत बहु स्यां प्रजायेय" इत्यादिना उच्यते। एवं च [2]"इदं सृजेयम्" इत्यादिसङ्कल्पवत्त्वं शुद्धस्य निराकारस्यापि ब्रह्मण एव सिद्धम्। स च सङ्कल्पः 'बहु स्याम्' इत्युत्तमपुरुषांतशब्देन बहुभवनरूपे विश्राम्यति। उत्तमपुरुषप्रयोगेन स्वस्यैव बहुभवनमित्यपि स्पष्टम्। एवं च परब्रह्मण एव सङ्कल्पवत्त्वं बहुभवनं च सिद्धमिति साक्षात् ब्रह्मण एव उपादानत्वं निमित्तत्वं च वर्तत एवेति अभिन्ननिमित्तोपादानत्वस्य न क्वापि क्षतिः॥

नन्वेवं सति ब्रह्मणः सविकारत्वापत्तिः इति चेत्—तेन किमिति प्रष्टव्यम्। सविकारत्वे विनाशप्रसङ्गः चेत्, सुवर्णस्य कटकात्मना परिणामे किं सुवर्णविनाशो दृष्टः? परिणामो हि द्विविधः, पूर्वरूपोपमर्दपूर्वकः तदनुपमर्दपूर्वकश्च। आद्यः काष्ठस्य भस्मीभावादौ। द्वितीयः सुवर्णस्य कटकभावादौ। आद्यः परिणामः खलु स्वरूपहानिकरः। द्वितीयस्तु न स्वरूपनाशकः॥

अथवा कूर्माङ्गभङ्गन्यायेन समन्वयः स्वरसो भवति। कूर्मः स्वशक्त्या स्वपादाद्यवयवानि स्वेच्छया बहिर्गतानि कृत्वा, पुनः स्वात्मनि निवेशनं करोति तथा परमशिवः सृष्टिकाले नामरूपविभागवत्त्वेन बहिः प्रकटीकृत्य, प्रलये स्वात्मनि स्वाभिन्नत्वेन प्रपञ्चं गोपयति। यथा पटस्य कदाचित् सङ्कुचितावस्था कदाचित् विकासावस्था लोके दृश्यते, तथा सङ्कुचितावस्थापन्नशक्तिविशिष्टः परमशिवः कारणं, प्रसारितावस्थापन्नशक्तिविशिष्टः शिवः कार्यमिति युज्यते। यथा पटस्य वेष्टितप्रसारितभेदेऽप्यभेदः तथा कार्यकारणयोः मृद्घटादिवदभेदः। यथा मृदः एकांशेन घटशरावात्मना परिणामेऽपि मृदात्मकत्वं न विरुध्यते, तथा परमेश्वरस्यापि स्वशक्त्येकांशेन जगदात्मना परिणामेऽपि जगदनन्यत्वं न विरुध्यते। यथा वायुरेकः प्राणापानादिवृत्तिभेदेन भिन्ननाम-

[1] छा. 6-2-3.　[2] तै. आ. 6.

रूपात्मककार्यभेदं भजते, तथा परमशिवः स्वशक्तिमहिम्ना प्रपञ्चाकारेण भासमानोऽपि अनन्य एव। यथा शिवयोगी ध्यानकाले प्राणायामेन वायुसङ्कोचनं करोति, व्यवहारकाले प्रसारणं करोति, तथा परमेश्वरः सृष्टिकाले जगत्प्रसारणं, प्रलयकाले तदाकुञ्चनं च करोति। तस्मात् परमकारणात् परमशिवात् कार्यरूपं जगदनन्यदिति जगद्ब्रह्मणोः अभेदः अभ्युपगम्यते। "असद्वा इदमग्र आसीत्" (तै. आ. 6.)इति श्रुतौ अग्रे सृष्टेः प्राक् इदं जगत् सूक्ष्मावस्थापन्नमासीत्। सृष्ट्यनन्तरं 'सदजायत' स्थूलावस्थाविशिष्टमासीत्। सूक्ष्मत्वरूपधर्मान्तरविशिष्टत्वमात्रेण असत्त्वव्यपदेशः। "ततो वै सदजायत" इति वाक्यशेषात् असच्छब्दस्य सूक्ष्मात्मकत्वं तद्भिन्नसच्छब्दस्य स्थूलात्मकत्वं अर्थः इति श्रुतिवाक्ययोः समन्वयः॥

एवं अन्तर्गतस्य तत्त्वजालस्य बहिर्निस्सरणमेव सृष्टिः,इत्युपपादनेन कथं ब्रह्मणो विनाशः प्रसज्येत ? एवं सुवर्णकटकदृष्टान्तेन च कूर्मदृष्टान्तेन ब्रह्मणः सविकारत्वं न दोषयेति वीरशैवानन्दचन्द्रिकायां (पु.४९) स्पष्टं उपपादितम्। अयं भावः। तूष्णीं स्थितो देवदत्तः उत्थाय गच्छति चेत् तावता देवदत्तस्वरूपस्य का वा हानिः? एवं प्रकृतेऽपि प्रलये तूष्णीं अवस्थितं ब्रह्म लीलया स्वांशैकदेशतः जगदात्मना परिणमते चेत् तावता ब्रह्मस्वरूपस्य का वा हानिः? अथवा ब्रह्मापि न साक्षात् स्वरूपत एव परिणमते किंतु स्वाविनाभूतशक्तिद्वारैव। एवं च जीवाविनाभूतशरीरगताः दोषाः यथा जीवं न स्पृशन्ति, तथा जगदाकारेण शक्तेरेव परिणामेन न ब्रह्मणो दोषप्रसक्तिः। अयमर्थः श्रीकरभाष्ये प्रकृत्यधिकरणे स्पष्टः। "ननु दधिक्षीरवत् स्वस्वरूपपरित्यागपूर्वकरूपांतरप्राप्तिरेव परिणामः। नित्यशुद्धस्य महेश्वरस्य परिणामित्वेन स्वरूपनाशित्वं विकारगुणप्रसङ्गश्च स्यादिति चेन्न, निमित्तभूतस्य उपादानत्वेऽपि न विकारादिस्पर्शः। परमेश्वरमायाशक्तेः जगद्रूपेण परिणामित्वं, तत्परमेश्वरस्य निमित्तकारणत्वं च प्रतिपाद्यते" (Page 180.) इति॥

ननु शक्तेरेव परिणामित्वे कथं ब्रह्मणः परिणामिकारणत्वरूपोपादानत्वनिर्वाहः इति चेत्, नहि शक्तिशक्तिमतोः वयं अत्यन्तभेदवादिनः, किंतु

भेदाभेदवादिनः । अतः परमात्मनः शक्त्यभिन्नत्वेन उपादानत्वं उपपद्यते । "माया तु प्रकृतिं विन्द्यात् मायिनं तु महेश्वरम् ।" (श्वे-4-10.)इति स्वाभिन्न-मायायाः नियम्यत्वं, परमेश्वरस्य नियामकत्वं च श्रूयते । अतो विश्वोभयकारणत्वं नान्यस्येति सिद्धम् । परंतु 'सन् हृदयप्रकाशः' इत्यादिश्लोकविवरणपूर्वकं शिवाद्वैतमञ्जर्यादौ सर्वत्र सत्तानुवृत्तिप्रतिपादनपुरस्सरं शिवाद्वैतसाधनेन सुवर्णकटकादिदृष्टान्तैः तादृशविकारस्य अदोषत्वसमर्थनेन च परब्रह्मण एव साक्षादुपादानत्वाङ्गीकरणमेव युक्तम् ॥

किंचैवं परिणामेनापि ब्रह्मण अविकारित्वं वचनशास्त्रे स्पष्टं उपपाद्यते । " ಜಲದೊಳಗಣ ಸೂರ್ಯನಂತಿರ್ಪನಯ್ಯ ಶಿವನು. ಲೋಕಾದಿ ಲೋಕಂಗಳೊಳಗಿರ್ದರೇನು, ಜಗದ ಪುಣ್ಯ ಪಾಪ ಸ್ವರ್ಗ ನರಕ ಬಂಧ ದೋಷಕ್ಕೊಳಗಾದಾತನೆ? ಅಲ್ಲ. ಅದೆಂತೆಂದೊಡೆ ಜಲದೊಳಗಣ ಪ್ರಕೃತಿ ವಿಕೃತಿಗಳು ಜಲಕ್ಕಲ್ಲದೆ ಸೂರ್ಯನಿಗಿಲ್ಲವಾಗಿ, ಲೋಕದ ಸ್ಥಿತಿಗತಿ ಲೋಕಕ್ಕಲ್ಲದೆ ಶಿವನಿಗಿಲ್ಲವಾಗಿ, ಅನಂತ ಕೋಟಿ ಬ್ರಹ್ಮಾದಿಗಳು ತನ್ನ ಒಡಲೊಳಗೆ ಅಡಗಿದವೆಂದಡೆ, ತಾ ಹೊರಗಾಗಿ ಒಡಗಲಿಡೆ ಏನುಂಟು, ಇದು ಕಾರಣ ನಮ್ಮ ವಿಶ್ವೇಶ್ವರನು ವಿಶ್ವದೊಳಗೆ ಹೊದ್ದಿಯೂ ಹೊದ್ದದಿಂಬಲ್ಲಿ–ವಿಶ್ವಾಧಿಪತಿಯಾಗಲೂ ಬಲ್ಲ". p.18) एवं लोके सर्वत्र स्थितोऽपि परमात्मा न लोकधर्मा, अत एव निरञ्जन सन् विराजते । "लोकेषु भूतोऽस्मि न लोकधर्मा" इत्यभियुक्तोक्तिः परमात्मनि सम्यगन्वेति ॥ सिद्धान्तशिखामणौ–

> यस्मादेतत्समुत्पन्नं महादेवाच्चराचरम् ।
> तस्मादेतन्न भिद्येत यथा कुम्भादिकं मृदः ॥ (10–62)
> शिवतत्वात्समुत्पन्नं जगदस्मान्न भिद्यते ।
> फेनोर्मिबुद्बुदाकारो यथा सिन्धोर्न भिद्यते ॥ (10–63)
> यथा तन्तुभिरुत्पन्नः पटः तंतुमयः स्मृतः ।
> तथा शिवात्समुत्पन्नं शिव एव चराचरं ॥ (10–64)

इत्यादिषु समुद्रतरङ्गफेनबुद्बुदन्यायेन ब्रह्मण एव नानात्मना अवस्थान-मेव उपपादितम् । एवम् —

आत्मशक्तिविकारेण शिवो विश्वात्मना स्थितः ।
कुटीभावाद्यथा भाति पटः स्वस्य प्रसारणात् ॥ (10-65)
पत्रशाखादिरूपेण यथा तिष्ठति पादपः ।
तथा भूम्यादिरूपेण शिव एको विराजते ॥ (10-66)

इत्यनेनापि ब्रह्मण एव जगद्भावापत्तिरुपपादिता । सूत्रकारैरपि 'उभयव्यपदेशात्त्वहिकुण्डलवत्' (ब्र.सू.3-2-26)इति अहिकुण्डलदृष्टान्तेन जगद्ब्रह्मणोरवस्थानं उक्तम् । अहेः कुण्डलभावऋजुभाववत् जीवब्रह्मणोः ज्ञानात्मकत्वेन एकत्वेऽपि परस्परविरुद्धानां सर्वज्ञत्वकिञ्चिज्ज्ञत्व-विभुत्वाणत्व-नित्यमुक्तत्व-नित्यबद्धत्वादिविरुद्धधर्माणां दर्शनात् भेदाभेद एव निश्चीयते । श्रुतिसङ्कोचे मानाभावात् उभयश्रुत्योः तुल्यबलत्वाच्च । भेदश्रुतीनां सर्वासां संसारदशाविषयत्वं, अभेदश्रुतीनां मोक्षदशापरत्वम् । नोचेत् आन्योन्यविरोधात् सर्वं शास्त्रं अप्रमाणं स्यात् इति भाष्ये समन्वयः क्रियते । एतत्सर्वपर्यालोचनया परशिवब्रह्मणः साक्षादेव जगदाकारतापत्तिरेव युक्ता । तदानीमेव च शिवस्य जगतश्च तत्र तत्रोक्तं तादात्म्यं स्वरसतः सङ्गच्छते ॥

एवं ब्रह्मणो विचित्रजगदाकारेण परिणामः कथम् ? कथं वा तद्गतदोषैरसंस्पर्शः ? इति शङ्कायां च ब्रह्मणः अपरिमितशक्तिमत्त्वात् सर्वमुपपद्यते । अयमेव इतरपरिणामवादापेक्षया एतद्दर्शने विशेषः, यत् शक्तिविशिष्टं ब्रह्मैव जगदात्मना परिणमते इति ॥

यद्यपि सिद्धान्तशिखामणौ घटाकाशदृष्टान्तः सूर्यप्रतिबिंबदृष्टान्तश्च दृश्यते । तेन च भेदस्य औपाधिकत्वमेवेति अद्वैतमतच्छाया पतति । अथापि जगत्सत्यत्वस्य बहुधा तत्र उपपादनेन अध्यासवादस्य क्रियासारादिषु स्पष्टं खण्डनेन नाद्वैतदर्शनसाम्यं अस्य दर्शनस्य । अविद्यापि अद्वैतिभिरङ्गीकृताद्विलक्षणा न मिथ्या, किंतु पारमेश्वरी सङ्कुचिता शक्तिः । परमात्मनिष्ठायाः विमर्शशक्तेः परिणामभूता प्रकृत्याख्या अधोमायाशक्तिरेव अविद्येति माया । 'अविद्याशक्तिभेदेन जीवा बहुविधाः स्मृताः' इति सिद्धान्तशिखामणौ

(5-42.) अविद्यायाः शक्तित्वेन प्रयोगदर्शनात् नाद्वैतमतसाम्यम् । इयं च अविद्याशक्तिः मोहकारिणीति सर्वविदिता । न तत्र कस्यापि विमतिर्विप्रतिपत्तिर्वा॥

निरवयवस्य एकस्यैव परमात्मनः नानात्वेन व्यवहारः, नानाभावश्च कथम्? इति शङ्कायां निरवयवेऽपि आकाशे भेदव्यवहारो दृश्यत इत्येतावन्मात्र एव तादृशदृष्टांतोपपादनं, नतु सर्वांशेऽपि । अन्यथा समुद्रतरङ्गपटकुटीभावादिदृष्टान्तानां असामञ्जस्यं आपद्येत? किंच भक्तिसिद्धान्तिन एते, नतु ज्ञानान्मोक्षवादिनः । भक्तिसिद्धान्ते च सर्वथा जगतो न मिथ्यात्वप्रसक्तिः ॥

ननु एतादृशसविकारत्वस्य अदोषत्वसमर्थनं अस्तु । अथाप्येवं सति ब्रह्मणो निर्विकारत्वश्रुतीनां का गतिरिति चेत्; प्रलयावस्थाकालिकब्रह्मपरत्वेन तासामुपपत्तिः । तर्हि सृष्टिकाले तादृशब्रह्मण एव जगदात्मना अवस्थानात् इदनीं तादृशवाक्यानां अर्थशून्यत्वं अवर्जनीयमिति न च शंक्यम् —

समुद्रतरङ्गन्यायेन हि ब्रह्मणः परिणाम उपपादितः । नहि तत्र अनन्तः समुद्रः सर्वोऽपि तरङ्गात्मना परिणमति, किन्तु समुद्रस्यैकदेशः उपरितनभाग एव । तदा च अधोभागे समुद्रः निश्चलोऽप्यवतिष्ठत एव । एवं प्रकृतेऽपि ब्रह्मणः स्वायुतायुतांशैकदेशत एव परिणामः । "विश्वोत्तरोत्तरविचित्रमनोरथस्य यस्यैकशक्तिशकले सकलः समासः" (श्रीक.भा._06पु.) इत्यभियुक्तोक्तेः ब्रह्मणः अत्यल्पांश एव विश्वाकारेण परिणमते । "पादोऽस्य विश्वा भूतानि, त्रिपादस्यामृतं दिवि" (पु-सू.) इति श्रवणात् ब्रह्माधिकांशस्य निर्विकारत्वं अविरुद्धम् । परिणामाऽनाश्रयभागानां आनन्त्येन इदानीमपि निर्विकारत्वस्य सुखेन. उपपादनं संभवत्येव । तथोक्तं गीतायामपि, 'विष्टभ्याहमिदं कृत्स्नं एकांशेन स्थितो जगत्' (10 42.) इति ॥

ननु समुद्रस्य सावयवद्रव्यत्वेन एकदेशांशेन तरङ्गाद्यात्मना परिणामः संभवेत् । ब्रह्मणस्तु अपरिच्छिन्नस्य निरवयवस्य कथं एकदेशसंभवः? कथं वा एकादेशांशेन परिणामो वा? इति चेत्; अयं आक्षेपः सर्वेष्वपि दर्शनेषु वर्तत एव । नैय्यायिकमते निरवयवे विभौ आकाशे घटादिसंयोगाः एकदेश एव

जायन्ते, नतु आकाशे सर्वत्र। निरवयवस्य आकाशस्य कथं एकदेशसंभवः? एवं सांख्यमते निरवयवे प्रकृतिद्रव्ये एकदेश एव महदाद्यात्मना परिणामः। नहि कृत्स्नमपि प्रकृतिद्रव्यं महदाद्याकारतां भजते। तदा चतुर्विंशतितत्त्वान्येव न स्युः। अन्तिमं एकमेव तत्त्वं अवशिष्येत। एवं विशिष्टाद्वैतमते एकमेव ब्रह्म निरवयवं परव्यूहविभवांतर्याम्यर्चावतारभेदं भजते। यदि च इमानि मतानि असङ्गतानि स्युः तदा विवर्तवाद एव अवतरेत्। स च श्रुत्यनुभवयुक्तिविरुद्धः शून्यवादे पर्यवस्येदिति सैद्धान्तिकैर्भावितः। अतः प्रतिसिद्धान्तं निरंशस्याप्येकदेशव्यवहारसत्वात् अस्माकमप्ययं न दोषः। कथमन्यथा, "विष्टभ्याहमिदं कृत्स्नं एकांशेन स्थितो जगत्" इति गीतायां 'एकांशेन' इति पदं सङ्गच्छेत?

सूत्रकारोऽपि इमामाशङ्कां उपक्षिप्य समादधत। तथाहि "कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा" (2-1-26) इति। अयमर्थः ब्रह्मण एव जगदात्मना परिणामाङ्गीकारे ब्रह्मणो निरवयवत्वेन कृत्स्नमपि ब्रह्म जगदाकारेण परिणमेत, तथा च ब्रह्मैव नावशिष्येत, कृत्स्नस्यापि जगदाकारेण परिणतत्वात्। ब्रह्मशेषसंरक्षणार्थं एकदेशेन परिणामाङ्गीकारे च ब्रह्म सावयवं स्यात्। एकदेशः तथैवावशिष्यते, एकदेशश्च जगदात्मना परिणमते इत्यंशभेदसिध्या ब्रह्म सावयवं स्यात्। तथा च ब्रह्मणो निरवयवत्वप्रतिपादकानि 'निष्कलं निष्क्रियं शान्तं (श्वे.6-19) इत्यादिवाक्यानि कुप्येयुः— बाधिता भवेयुः इत्येवं प्रबले आक्षेपे तत्र सिद्धान्तमाह— 'श्रुतेस्तु शब्दमूलत्वात्' (2-1-27) इति। निरवयवमपि ब्रह्म स्वरूपतोऽवतिष्ठते, जगदात्मना परिणमते चेति श्रुत्या अवगम्यते। निष्कलमिति या श्रुतिः ब्रह्मणो निरवयवत्वं घोषयति सैव श्रुतिः 'बहु स्याम्' (छा.6-2-3) "तदात्मानं स्वयमकुरुत' (तै.आ. 6) इत्यादौ ब्रह्मणः परिणाममपि वदति। अन्यतरश्रुतेः अप्रामाण्यग्राहकप्रमाणाभावेन श्रुतिद्वयमपि प्रमाणमेवेत्यङ्गीकरणीयम्। कुत इदमित्यत्र आह— शब्दमूलत्वादिति। ब्रह्म हि शब्दैकसमधिगम्यम्। एवं सति शब्दैर्यादृशस्वरूपस्वभावगुणविशिष्टं ब्रह्म बोध्यते तत् तादृगमेव अव-

गन्तव्यम् । ननु तत्र यौक्तिकवादावतारप्रसक्तिः । एतदुक्तं भवति । परब्रह्म अङ्गीकृत्य तस्य जगदुपादानत्वं आक्षिप्यते ? तदनङ्गीकृत्य वा ? आद्यपक्षे परब्रह्माङ्गीकारे किं प्रमाणमिति वक्तव्यम् । श्रुतिरेव चेत्, तर्हि यया श्रुत्या ब्रह्मसिद्धिः, ययैव च श्रुत्या तस्य निरवयवत्वबोधनं च, तयैव श्रुत्या तस्य उपादानत्वमपि बोध्यते चेत् तदपि अङ्गीकरणीयमेव; सर्वेषां श्रुत्यैव बोधनात्। इदमेव धर्मिग्राहकमानमित्युच्यते । धर्मी येन प्रमाणेन गृह्यते तेनैव प्रमाणेन तद्धर्मिग्रहणवेलायामेव यादृशगुणको गृह्येत तद्गुणक एव स वाच्यः । यथा 'अयं वह्निरुष्णः' इत्यादिप्रतीतौ हि येन त्वगिन्द्रियेण वह्निः गृह्यते तदैव उष्णस्पर्शविशिष्ट एव स गृह्येत, नतु उष्णस्पर्शरहितः । तदा खलु वह्निरिति प्रतीतिरेव न स्यात् । एवं प्रकृतेऽपि ब्रह्म लक्षणैकगम्यमिति जन्माद्यधिकरणे सर्वैरुक्तम् । तच्च लक्षणम् 'यतो वा इमानि भूतानि जायन्ते' (तै.भृगु.) इत्यादिवाक्यैर्बोध्यते । एवं च लक्षणद्वारा ब्रह्मग्रहणवेलायामेव जगत्कारणत्वादिविशिष्टं ब्रह्मैव गम्यते । एवं ब्रह्मरूपधर्मिग्राहकेण प्रमाणेनैव तस्य जगत्कारणत्वमपि गृहीतमेव । जगत्कारणत्वरूपलक्षणज्ञानाभावे हि ब्रह्मैव न ज्ञायेत । अतो धर्मिग्राहकप्रमाणेनैव जगत्कारणत्वमपि सिद्धमेवेति सिद्धस्य न निराकरणसंभवः । एवं जगत्कारणत्वमुखेन ब्रह्मप्रतीत्यनन्तरं तस्य निरवयत्वबोधनेऽपि पूर्वप्रतिपन्नजगत्कारणत्वाविरोधेनैव तन्निर्वाहः । निर्वाहश्च निरवयवमपि ब्रह्म एकदेशैकांशेन परिणमते । इतरांशेन निर्विकारमप्यवतिष्ठते च इत्यङ्गीकारेणैव वक्तव्यः । एवं ब्रह्म अङ्गीकृत्य तस्य उपादानत्वाक्षेपविकल्पो न युक्तः ॥

द्वितीयविकल्पे तु शास्त्रयोन्यधिकरणमेव उत्तरं ददाति । ननु कथमिदं ! निरवयवं ब्रह्म, अथापि तस्य अंशाः इति ? नहि लोके कुत्रापि ईदृशं वस्तु पश्यामः इति ? शङ्कायामाह—'आत्मनि चैवं विचित्राश्च हि' (ब्र.सू. 2-1-28)इति । अस्तु तावत् परब्रह्मणः कथा । किञ्चिज्ज्ञे अल्पशक्ते जीवात्मन्येव अन्यत्र कुत्राप्यदृष्टाः कार्यविशेषाः ज्ञानेच्छाकृत्यादयः सर्वानुभवसिद्धाः । जीव-

व्यतिरिक्ते घटपटादौ कुत्राप्यदृष्टचारी एतादृशी शक्तिः जीवस्य परं कथं सङ्गच्छते ? इत्याक्षेपे किमुत्तरं वक्तव्यम् ? तद्वस्तुस्वसाधारणस्वभावोऽयम् इति खलु वक्तव्यम्, तत् प्रकृतेऽपि तुल्यम्। लोकेऽन्यत्र कुत्रापि अदृष्टाः विचित्राः शक्तिविशेषाः तद्वस्तुमात्रे अनुभूयन्ते। यथा वह्नौ ज्वलनशक्तिः, पृथिव्यां धारणशक्तिः, जले आप्यायनशक्तिः, वायौ स्पन्दनशक्तिः, आकाशे व्यापनशक्तिः, आत्मनि बुद्धिशक्तिः इत्येवमादि। एवं प्रकृतेऽपि ब्रह्मणः तादृशी विचित्रा शक्तिरङ्गीकरणीया। श्रूयते च तथा 'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' (श्वे.6–8)इति। एवं सर्वशक्तिविशिष्टस्य निरवयस्य परमात्मनः स्वमायाशक्त्या विचित्रनानाविधब्रह्माण्डात्मना परिणामः उपपद्यते। किंच चेतनपुरुषे अचेतनकेशनखादिविचित्रा उत्पद्यन्ते। तमःप्रकाशवद्विरुद्धस्वभावयोः वह्निसलिलयोः अविरोधेन समुद्रे अवस्थानं दृश्यते। पुरुषशरीरे जठराग्निर्दृश्यते। एवं लोकातीतस्य सर्वमहिमातिशयस्य ब्रह्मणः न किञ्चिदनुपपन्नम्॥

अस्मिन् सूत्रे श्रीकरभाष्ये अयमर्थः पुराणवचनेन सम्यक्स्थापितः। यथा,

निर्गुणस्याप्रमेयस्य शुद्धस्याप्यमलात्मनः।
कथं सर्गादिकर्तृत्वं ब्रह्मणोऽभ्युपगम्यते॥ इति शिष्येण पृष्टः पराशरः
शक्तयः सर्वभावानां अचिन्त्यज्ञानगोचराः।
यतोऽतो ब्रह्मणस्तास्तु सर्गाद्याः भावशक्तयः।
भवन्ति तपतां श्रेष्ठ पावकस्य यथोष्णता (वि.पु.205) इत्याह। अतः परमात्मनः तादृशविचित्रशक्तियोगात् एकदेशे निर्विकारतया अवस्थानम्, एकदेशेन जगदात्मना परिणामश्च सम्भवत्येव। श्रुतिस्मृतिष्वपि निरवयवस्य परमशिवस्यैव कर्तृत्वं दृश्यते। एवं अस्मिन्नधिकरणे निरवयवस्य परिणामं आक्षिप्य समाधानकरणेन ब्रह्मण एव साक्षात् जगदात्मना परिणामः स्पष्टं व्यासेन सिद्धान्तितः। यदि च ब्रह्मणः साक्षात् विकारवत्त्वं नास्ति, ब्रह्माविनाभूतायाः शक्तेरेव परिणामः, तादृशशक्तिविशिष्टत्वाच्च ब्रह्मण उपादानत्वव्यवहार इत्ययमर्थः सूत्रकाराभिमतः स्यात् तर्हि एवं सूत्रकरणं क्लेशेन निरवयवत्वनिर्विकारत्वयोः समन्वय-

समर्थनं च व्यर्थमेव । कथं निरवयवं ब्रह्म एकांशेन परिणमेत इत्याक्षेपे, नहि ब्रह्म साक्षात् परिणमते किन्तु तदविनाभूता शक्तिरेव परिणमते इति खलु सुलभतया समाधानं वक्तव्यम् । तत्परित्यज्य एवं विचित्रशक्तियोगं साधयता सूत्रकारेण ब्रह्मण एव जगदात्मना परिणाम इति स्पष्टमुक्तमेव ॥

तर्हि शक्तेः पदार्थस्य किं कृत्यमिति चेत् वह्निनैव दाहे सति वह्निनिष्ठौष्णशक्तेः किं कृत्यमितिवत् उपहास्यमिदम् । यादृशौष्ण्यशक्तियोगात् वह्निर्दहति तादृशशक्तेः प्रयोजनं को वा अनुन्मत्तः पृच्छेत् ? एवं प्रकृतेऽपि यादृशविचित्रापरिमितशक्तियोगात् ब्रह्म जगदात्मना परिणमते तादृशशक्तिवैयर्थ्याशङ्कायाः न कापि प्रसक्तिः । एवं विचित्रशक्तियोगमेव उपसंहरति सूत्रकारः 'सर्वोपेता च तद्दर्शनात्'(ब्र.सू.2-1-30)इति । एवं अत्र सिद्धान्तयन् सूत्रकारः विवर्तवादमपि निराचकार । पूर्वोक्तरीत्या आक्षेपे विवर्तवाद एव यदि सूत्रकारसम्मतः स्यात् तदा शुक्तौ रजतमिव ब्रह्मणि जगदिदमध्यस्तम्, अतो न निरवयत्वभङ्गः इति खलु वदेत् । तत्परित्यज्य अनंतशक्तियोगं निर्गुणविवर्ताद्वैतवादविरुद्धं समर्थयन् सूत्रकारः विवर्तवादं निराचकारैव । एवमनेनाधिकरणेन साक्षात् ब्रह्मण उपादानत्वमनङ्गीकृत्य तद्विशेषणीभूतयोः चिदचितोः शक्तेर्वा उपादानत्वाङ्गीकारसिद्धान्तं, विवर्तवादं च स्वानभिमतं प्रकटयति सूत्रकारः ॥

तथा च ब्रह्मणः परिणामस्य निर्दुष्टत्वसाधनेन पूर्वं प्रकृत्यधिकरणोक्तं ब्रह्मोपादानत्वं सुदृढं भवति । तत्र हि "साक्षाच्चोभयाम्नानात्" आत्मकृतेः परिणामात्", (ब्र.सू.1-4-26-27) इति सूत्रयोः ब्रह्मण एव साक्षात्परिणाम उक्तः, न तु विशेषणयोः चिदचितोः, शक्तेर्वा । 'विवर्तात्' इत्यनुक्त्वा 'परिणामात्' इति रचनेनैव ब्रह्मपरिणामवाद एव सूत्रानुगुणः । समुद्रतरङ्गकूर्मदृष्टान्तेन सिद्धान्तसम्मतश्च । अहिकुण्डलदृष्टान्तकथनेन सूत्रकारसम्मतश्च इति प्रतिभाति । निरतिशयानन्दस्वभावस्य निर्लेपस्य अनन्तकल्याणगुणाकरस्य निमित्तकारणभूतस्य महेश्वरस्य प्रकृतित्वेन विश्वात्मकत्वं अविरुद्धम् । अतः तस्यैव प्रपञ्चाकारेण परिणमनं सूत्रकारसम्मतम् । अथैतदुपरि एका शङ्का

अवशिष्यते। ब्रह्मण एव जगदात्मना परिणामे जगतः हेयद्रव्यत्वेन ब्रह्मणोऽपि हेयाकारकत्वे ब्रह्मणो निरवयत्वप्रतिपादकश्रुतिविरोध इति। अत्रापि समाधानम् "श्रुतेस्तु शब्दमूलत्वात्" इति सूत्रमेव वक्ति–मूर्तामूर्तोभयविधश्रुतिबलात् तस्य निरवयत्व–सावयवत्व–सर्वोपास्यत्व–सर्वविलक्षणत्व–सर्वात्मकत्व–सर्वाधारत्व-सर्वप्रकाशकत्व-सर्वान्तर्यामित्व–सर्वेश्वरत्वादिकं सकलमुपपद्यते। स्वतंत्रत्वात् शिवस्य मूर्तामूर्तत्वं युज्यते। तथा च भाष्यम्—"उदिते जुहोति, अनुदिते जुहोति, यवैर्वा यजेत, तण्डुलैर्वा यजेत" इत्यादिश्रुतीना उभयसिद्धिरिति न्यायेन तदुभयस्वीकारवत् अत्रापि उभयश्रुतिदर्शनात् तदुभयं विधेयमेव। तदुभयोरेकांशप्रधाने अर्धजरतीन्यायेन श्रुत्यप्रामाण्यं प्रसज्येत। शिवः अवयववत्त्वेन कैलासाद्यप्राकृतदिव्यस्थानेषु स्थित्वा तदुपासकानां भक्तानां सालोक्यादित्रिविधनित्यकल्याणविभूतिं दत्वा स्वनिरवयवचिद्घनोपासकानां निरस्तसमस्तमलानां भक्तानां कैवल्यविभूत्यात्मकं स्वप्राप्तिं अनुगृह्णाति। तस्मात् तदुभयोपासनमपि उक्तम्" ॥ (श्रीक.भा-208)

किंच परमात्मनः लीलया आकारपरिग्रहेऽपि निर्दोषत्वं युज्यते। वस्तुनि दोषादोषादिकं पुरुषवासनामूलमेव। एवं कालदेशभेदाद्यधीनं च। एकस्य माधुर्ये प्रीतिः, अपरस्य कटौ प्रीतिः। ग्रीष्मे गन्धः सुखाय, हेमन्ते स एव दुःखाय। बाल्ये प्रीतिविषयस्य यौवने प्रीतिविषयत्वं नास्ति। यौवने प्रीतिविषयस्य वार्धक्ये प्रीतिविषयत्वं नास्ति। अतो वस्तुषु दोषो नाम नास्ति। दोषगुणादिकं तु तत्तत्कर्ममूलकमेव। तथोक्तम्— (वि.पु.2–6–47) इति।

> वस्त्वेकमेव दुःखाय सुखायेर्ष्यागमाय च।
> कोपाय च यतस्तस्मात् वस्तु वस्त्वात्मकं कुतः ॥
> तदेव प्रीतये भूत्वा पुनर्दुःखाय जायते।
> तदेव कोपाय यतः प्रसादाय च जायते।
> तस्माद्दुःखात्मकं नास्ति न च किञ्चित्सुखात्मकम् ॥

एवं न कर्मपरवशानां अस्माकं दृष्ट्या जगतः अपुरुषार्थरूपत्वं हेयत्वं प्रतीयेत । कर्मानधीनस्य परमेश्वरस्य कथमिदं अवद्यरूपं भूयात् । अस्माकं अमेध्यवस्तुसम्बन्धे अशुद्धिर्भवति, सर्वपावनस्य सूर्यरश्मेः अमेध्यवस्तुसंबन्धात् नहि अशुद्धिः । अतः जगदात्मना परिणतमपि ब्रह्म निरवद्यमेवेति न कोऽपि दोषः । तस्य सर्वशक्तिकत्वात् स्वतंत्रत्वाच्च सर्वमविरुद्धम् ॥

अपि च समुद्रतरङ्गदृष्टान्तेनैव ब्रह्मणः परिणामः पूर्वमुदाहृतः । एकस्यैव द्रव्यस्य बहुधा परिणामस्थले परिणतवस्तुगतविशेषादयः उपादानद्रव्ये नागच्छेरन् । समुद्रस्यैव तरङ्गाद्याकारेण परिणतौ तरङ्गगतं ह्रस्वत्वदीर्घत्वादिकं न समुद्रे भासते । फेनगतं धावल्यादिकं समुद्रे न भासते । किंतु तत्तद्वैशिष्ट्यं तत्र तत्रैव प्रतिनियतं दृष्टम् । एवं ब्रह्मणो जगदात्मना परिणामेऽपि जगति विद्यमानदोषादिकं ब्रह्म न संस्पृशेदिति तत्तत्स्वभावव्यवस्थाया लोकदृष्टत्वेन ब्रह्मणः न सावद्यत्वप्रसक्तिः ॥

एवं एतावता प्रबन्धेन इतरासाधारणं ब्रह्मणः साक्षादुपादानत्वं समर्थितम् । अत एव अस्मिन्नेव मते एकविज्ञानेन सर्वविज्ञानं विना क्लेशं सङ्गच्छते । ब्रह्मण एव साक्षात् जगद्भावापत्त्या उपादाने अवगते तदभिन्नानां उपादेयानां सुखेन ज्ञानं शक्यते । विशिष्टाद्वैतमते हि नैवं स्वारस्यं संभवति, ब्रह्मविशेषणीभूतयोः चिदचितोरेव साक्षात्परिणामाश्रयत्वात् । उत्तरत्रोक्तमृत्तत्कार्यदृष्टान्ते स्वरूपपरिणामस्यैव सर्वसम्मतत्वेन तदनुरोधेन दार्ष्टान्तिकेऽपि स्वरूपपरिणामाङ्गीकार एव एकविज्ञानेन सर्वविज्ञानं स्वरसं स्यात् ॥

यद्यपि भाष्यादिषु एतादृशेषु बहुषु विषयेषु विशिष्टाद्वैतमतसम्मता प्रक्रिया आदृतेव भाति । एतत्तत्त्वं तु जीवस्वरूपनिरूपणावसरे व्यक्तीभविष्यति। एवमेतावता प्रकृत्यधिकरणकृत्स्नप्रसक्त्यधिकरणसूत्रभाष्याद्युक्तं सिद्धान्तशिखामण्याद्युपपादितं ब्रह्मणः साक्षादुपादानत्वं समर्थितम् ॥

सिद्धांतशिखामणौ हि समुद्रतरङ्गन्यायाभिधानमात्रमेव न, प्रत्युत इदमपि द्रष्टव्यम् —

गुणत्रयात्मिका शक्तिः ब्रह्मनिष्ठा सनातनी ।
तद्वैषम्यात्समुत्पन्ना तस्मिन् वस्तुत्रयाभिधा ॥ (5-36)

इत्यनेन स्वशक्त्युपबृंहणवशात् ब्रह्मण एव भोक्तृभोज्यप्रेरकभावापत्तिः स्पष्टमुपपादिता । तत्र भोक्तृभोज्ययोस्स्वरूपं तत्तत्प्रकरणे विवेचयामः । "परतत्वमशोपाधिः ब्रह्मचैतन्यमीश्वर" (सि.शि.5-38) इति परमात्मचैतन्यमेव ईश्वरपदवाच्यं प्रेरकमित्युक्तम् । इदमेव तत्त्वं षट्त्रिंशत्तत्त्वेषु आद्यं शिवतत्त्वाभिधेयमिति बोध्यम् ॥

**त्रिमूर्तयः**—षट्त्रिंशत्तत्त्वनिरूपणावसर एव ब्रह्मविष्णुरुद्राणां त्रिमूर्तीनां परमशिवादुत्पत्तिः प्रतिपादितैव । अत्र प्रमाणं न केवलं सिद्धांतशिखामण्यादिरेव, अपि तु 'ब्रह्मविष्णुरुद्रेन्द्रास्ते सर्वे संप्रसूयन्ते' इत्यथर्वशिखोपनिषदपि । एतन्मूर्तित्रयकारणभूतं ब्रह्मैव परमशिवपदवाच्यं महालिङ्गमिति पूर्वमेव उक्तम्। उमापतित्व-कैलासपतित्व-त्रिलोचनत्व-नीलकण्ठत्वादिकमपि कार्यभूतशिवस्यैव, नतु परमकारणस्य परमशिवस्य इति च पूर्वमुक्तम् । दासगुप्तमहाशयः अस्मिन् विषये एवं अभिप्रैति— .

"It is true from Brahman, the ultimate cause, though unspeakable and unthinkable, the Gods Brahma, Vishnu and Rudra have sprung forth together with all gross matter and sense faculties. He is the cause of all causes and is not produced from any other causes. He is omnipotent and the lord of all. He stands silent and rooted in one place like a tree and yet pervades the whole universe" (Das. H. I. P. Vor III)

ननु श्रीवैष्णवा हि त्रिमूर्त्यंतर्गतविष्णोरेव परब्रह्मत्वं वदन्तीति तेषां वैष्णवत्वव्यवहारो युक्तः । नैवमेतस्मिन् मते अङ्गीक्रियते, किंतु त्रिमूर्त्यतीतमेव परं ब्रह्म परमशिवाभिधम् । एवं सति अस्य मतस्य शैवमतत्वेन व्यवहारः कथम्? अत्रोच्यते । सत्यम्, परं ब्रह्म निराकारमेव । तदेव प्राप्यम् । तत्प्राप्तिहेतुभूतं साकारं शिवाख्यं उपास्यं ब्रह्मैव अनुग्रहद्वारा

मुक्तिहेतुः भवति। तत्प्रसादादेव हि मोक्षः। अयमंशः मुक्तिविचारे स्पष्टीभविष्यति। एवं निराकारब्रह्मभावापत्तिरूपा मुक्तिः साकारस्य शिवपदवाच्यस्य उपासनयैव भवति। एतत्सिद्धान्ते यतः शिवोपासनैव अङ्गीक्रियते, अत एते शैवा इत्युच्यन्ते। एतदुक्तं भवति। सिद्धान्ततत्त्वविषये श्रीकण्ठादिवत् नायं शैवसिद्धान्तः। साधनमार्गे परं शैवसिद्धान्तः। परं तु निराकारस्यापि ब्रह्मणः साकारोपासनद्वारा मुक्तिहेतुत्वं वर्तत एवेति तस्य उमापतित्वाद्यभावेऽपि शिवरुद्रमहादेवादिपदवाच्यत्वं वर्तत एव, शिवशब्दस्य ब्रह्मपर्यायत्वात्। यथा सिद्धान्तशिखामणौ—"शिवरुद्रमहादेवभवादिपदसंज्ञितम्। *शिवाभिधं परं ब्रह्म*" (२–८) इति दृश्यते। एतदभिप्रायेणापि अस्य शैवमतत्व व्यवहारो युज्यत एव॥

वीशब्देनोच्यते विद्या शिवजीवैक्यबोधिनी।

तस्यां रमंते ये शैवा वीरशैवास्तु ते स्मृताः" (५–१५) इति सिद्धान्तशिखामणिवचनेन शिवजीवैक्यबोधिनी या षट्स्थलविद्या तस्यां रमंते ये शैवाः ते वीरशैवा इति व्युत्पत्त्या षट्स्थलविद्याप्रतिपादकस्यास्य दर्शनस्य वीरशैवसंप्रदायपदवाच्यता युज्यत इति न काप्यनुपपत्तिः॥

## सप्तमोऽध्यायः

## जीवस्वरूपम्

एवं शिवाभिधपरब्रह्मस्वरूपं विचारितम्। अथ जीवस्वरूपं विचार्यते। जीवस्वरूपं एवं प्रदर्श्यते भाष्ये—"अनादिस्वभाविकमायापाशबद्धघोरापारनिस्सारसंसारव्यापारतापत्रयानलदन्दह्यमाननानाशरीरप्रवेशनिर्गमनवर्णाश्रमाभिमानविशिष्टकामक्रोधाद्यनुस्यूतसुखदुःखाद्याश्रयत्वं जीवत्वम्" इति। "सर्वज्ञः प्रेरकः शंभुः किंचिज्ञो। जीव उच्यते" (सि.शि.5–40) इति जीवपरमात्मभेदः कथ्यते। उपनिषत्सु 'यथा सुदीप्तात् पावकात् विस्फुलिङ्गाः-

सहस्रशः प्रभवन्ते सरूपाः+तत्र चैवापि यन्ति' (मुं.2—1-1) इति वह्निविस्फुलिङ्गादिदृष्टांतेन जीवानां परमात्मन उत्पत्तिः प्रतिपाद्यते। एवं बृहदारण्यकेऽपि— "यथाग्नेः क्षुद्राः विस्फुलिङ्गा व्युचरन्ति एवं एतस्मादात्मनः सर्वे प्राणा व्युचरंति" (बृ. 4—1-20) इत्युच्यते। अनेन जीवस्य परमात्मांशत्वं स्पष्टं उक्तं भवति। "तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत्" (श्वे.4-10) इत्यादिभिः जीवानां ब्रह्मांशत्वं श्रूयते। "यतो वा इमानि भूतानि जायंते, येन जातानि जीवंति" (तै.भृ)इति जीवानां बहुत्वं च श्रूयते। "विस्फुलिङ्गा यथा वह्नौ जायन्ते काष्ठयोगतः। अनादिवासनायुक्ताः क्षेत्रज्ञा इति ते स्मृताः" (श्रीक.भा. P. 274) इति शिवगीतायां जीवानां ईश्वरांशत्वं उपदिश्यते। गीतायामपि 'ममैवांशो जीवलोके जीवभूतः सनातनः' (गी.15-7) इति जीवस्य भगवदंशत्वं उक्तम्॥

षट्त्रिंशत्तत्त्वस्वरूपनिरूपणावसरे, शिवांशः मायाशक्तिप्रवेशेन पुरुषशब्दवाच्यो जीवो भवतीति प्रागेव निवेदितम्। स्वाश्रयामोहकारिण्याः ऊर्ध्वमायाभिधानायाः शुद्धमायाशक्त्याः संबन्धेन, कर्तुं अकर्तुं अन्यथाकर्तुं शक्तो महेश्वरः नानाविधदिव्यमङ्गलविग्रहधारणेन भक्तान् अनुगृह्णाति। वशीकृतमायाशक्तित्वात् स्वतंत्रं परशिवं तदधीना माया न कदापि बध्नाति। इयमेव मायाशक्तिः अहन्तेदन्तयोः भेदबुद्ध्या अशुद्धा भवति। सैव अविद्याशक्तिरुच्यते। स्वाश्रयमोहिन्याः अस्याः प्रभावेन जीवाः ब्रह्मैक्यज्ञानवर्जिताः निजकर्मानुसारेण संसारे नानायोनिषु परिभ्रमन्ति। एवं'अविद्याशक्तिभेदेन जीवा बहुविधाःस्मृताः'(सि.शि.5-42)'ज्ञाज्ञौ द्वावजावीशानीशौ', (श्वे.1-9)'प्रधानक्षेत्रज्ञपतिर्गुणेशः' (श्वे.6-16) इत्यादिश्रुतिष्वपि अद्वितीयशिवस्य सर्वज्ञत्वाद्यसाधारणधर्मोपदेशात् शुद्धचिद्रूपत्वम्, स्वाभाविकाविद्यापाशबद्धत्वात् जीवस्य अज्ञत्वं सर्वानुभवसिद्धम्। अयं आशयः दासगुप्तमहोदयेनैवं उपवर्ण्यते—

"The souls are essentially of the nature of Siva but yet they have an innate impurity which, in all

probability is due to the influx of माया into them.' "The individual souls are, in reality, not different from God, they are but His parts as the sparks of fire are the parts of fire, but it is the peculiarity of these Parts of God, the souls, that though one with Him, they have been under the influence of ignorance, desire and deeds from beginningles times. The indivdual souls are naturally full of impurities and it is for that reason that they pass through the cycle of birth and rebirth"(H.I.Ph". VolIIIp.6)

अत्र विचार्यते—कोऽयं अंशांशिभावः इति । तत्र अंशांशिभावः औपाधिकः, अन्ते अंशांशिनोः तादात्म्यं इति अभेदवादिनः । चेतनाचेतनरूपविशेषणद्वयविशिष्टचैतन्यस्यैव ब्रह्मपदार्थत्वेन विशिष्टवस्तुनि विशेषणमपि एकदेश एवेति विशेषणभूतः चेतनः अंश एव । घटः इत्युक्ते घटत्वविशिष्टं द्रव्यं बोध्यते । एवं च घटपदार्थे विशेषणं एकोऽशः विशेष्यं एकोंऽशः इत्युच्यते । एवं प्रकृतेऽपि ब्रह्मजीवयोः विशेषणविशेष्यभावप्रयुक्तः अंशांशिभावव्यवहार इति विशिष्टाद्वैतिनः । एतच्छाया श्रीकरभाष्यादिषु बहुलं उपलभ्यते । 'प्रकाशादिवत्तु नैवं परः' इति सूत्रभाष्ये स्पष्टमेव विशेषणविशेष्यभावप्रयुक्तः अंशांशिभाव उपपादितः । प्रकाशादिवत् जीवः परमात्मनः अंशः । यथा अग्न्यादित्यादेः भास्वतः भारूपः प्रकाशः अंशो भवति, यथा गवाश्वादीनां गोत्वादिविशिष्टानां वस्तूनां गोत्वादिविशेषणानि अंशाः, यथा वा देहिनो देवमनुष्यादिर्देहः अंशः, तद्वत् । एकवस्त्वेकदेशत्वं हि अंशत्वं, विशिष्टैकस्य वस्तुनो विशेषणं अंश एव । तथा च विवेचका विशिष्टवस्तुनि विशेषणांशोऽयं विशेष्यांशोऽयं इति व्यपदिशन्ति । विशेषणविशेष्ययोः अंशांशित्वेऽपि स्वभाववैलक्षण्यं दृश्यते । एवं जीवपरयोः विशेषणविशेष्ययोः अंशांशित्वं स्वभावभेदश्च उपपद्यते । तदिदमुच्यते, 'नैवं परः', यथाभूतो जीवः न तथा भूतः परः इति । प्रभाप्रभावतोरिव जीवपरयोः स्वभाववैलक्षण्यं आश्रित्य भेदनिर्देशाः प्रवर्तन्ते । अभेदनिर्देशास्तु पृथक्सिद्ध्यनर्हविशेषणानां

तिलतण्डुलयोर्मेलनम् । एवं प्रकृतेऽपि जीवब्रह्मणोः एकजातीयत्वादेव मुक्तावैक्यसंभवः। सरित्समुद्रदृष्टान्तः मुक्तौ उच्यते । तत्र अवयवस्य अवयविनि ऐक्यं दृष्टम् । समुद्रजलमेव सूर्यकिरणवशात् मेघो भूत्वा प्रवर्ष्य सरिदभूत् । अतः सरित् समुद्रावयव एव । परंतु सरित्त्वावस्थायां भिन्ना प्रतीयते । एवं अग्नेः विस्फुलिङ्गा अवयवा एव । अतः जीवब्रह्मणोः अवयवावयविभाव एव युक्तः ॥

ननु निरवयवस्य ब्रह्मणः कथं अवयवाः संभवन्तीति चेत्, तत् पूर्वमेव विस्तरेण कृत्स्नप्रसक्त्यधिकरणन्यायवर्णनेन समाहितम् । परशुरामः विष्णोरंशः इत्युच्यते । निरवयवस्य विष्णोरंशः कथं इति वक्तव्यम् । अतः सर्वशक्तो भगवान् स्वेच्छया जगत्सृजन् स्वांशं मायाशक्तौ संयोज्य जीवं ससर्ज इति वक्तव्यम् ॥

अग्निस्थानापन्नं परं ब्रह्म, विस्फुलिङ्गस्थानापन्नो जीवः । अखण्डस्य वह्नेः विस्फुलिङ्गभावापत्तौ हेतुभूतं यत् पार्थिवं द्रव्यं तत्स्थानापन्नं मायातत्त्वम् । 'मं शिवं परमं ब्रह्म प्राप्नोतीति स्वभावतः । मायेति प्रोच्यते लोके ब्रह्मनिष्ठा सनातनी' 'मं शिवं अयति स्वभावतः प्राप्नोति' इति माया इति व्युत्पत्त्या मायानाम विमर्शशक्तेः परिणामः इति सिद्धागमः मायास्वरूपं निर्वक्ति । मायास्वरूपं एवं उपवर्ण्यते दासगुप्तमहाशयेन— Maya is regarded as the substantial entity which is the cause of the world. The bondage comes out of the products of Maya, so Maya is the original cause of bondage. It is not illusory as the Vedantins say, but it is the material cause of the world. We thus see that the energy of God behaving as Mala, Maya and Karma forms the basic conception of bondage" (H.I.Ph. Vol V p.165.)

एवं च माया विविधविचित्रकार्यकारिणी पारमेश्वरी व्यामोहिनी शक्तिः। इयमपि माया तादृशपरमात्मचैतन्यप्रकाशं आवार्य जीवे स्वतः परमात्मांशभूते 'नाहमीश्वरः' इति ईश्वरव्यतिरिक्तजीवभावं आपादयन्ती विचित्रकार्य-

कारिणी भवति । एवं परमात्मनो जीवभावापत्तिः किमर्था इति चेत्, उपास्योपासकभावरूपलीलार्थेति पूर्वमेवोक्तम् । अथैवं सति संसारदशायामपि जीवब्रह्मणोः अभेद एव स्वाभाविकः, मायौपाधिकस्तु भेद इत्युक्तं भवति । एतच्च सिद्धान्तविरुद्धम् । भेदाभेदयोरुभयोरपि स्वाभाविकत्वस्य सिद्धान्ते अङ्गीकारात् । स्वतो ब्रह्मणो निरवयवत्वेन अवयवावयविभावो न संभवति । अवयवावयविभावस्य औपाधिकत्वे अपसिद्धान्तः । संसारदशायां भेदः मुक्तिदशायां चाभेदः इत्यसकृत् श्रीकरभाष्यादिषु उद्घोषितम् । एतत्सर्वं मायोपहितचैतन्यं जीव इत्यङ्गीकारे विरुद्धमेव स्यात् इति चेत्, अत्रेदमुच्यते । मायोपहितं चैतन्यमेव जीव इति नास्माभिरुक्तम् । किंतु स्वीयमायाशक्त्यंतःप्रविष्टं चैतन्यं जीव इति ॥

नन्वनयोः को विशेष इति चेत्, अस्ति महान् विशेषः । मायोपहितमित्युक्ते महाकाशस्य घटरूपोपाधिवशात् घटाकाश इति व्यवहारो यथा तथेति स्यात् । मायाप्रविष्टमित्युक्ते तु सरिज्जलं कुंभप्रविष्टं सत् कुंभजलमिति यथा व्यवह्रियते तथेति स्यात् । तत्र घटाकाश इति व्यवहारः औपाधिक इति सर्वसम्मतः । कुंभजलमिति व्यवहारस्तु न औपाधिकः, किंतु स्वाभाविक इत्येव व्यवहारः । अतः तयोरस्ति महान् विशेषः । ननु इतोऽपि विविच्य उच्यतामिति चेत्, वदामः—औपाधिकव्यवहारस्थले आकाशादिकं तथैव अच्छेद्यं सत् घटरूपोपाधिसंबन्धवशात् भिन्नं इति व्यवह्रियते । तत्र एकत्वमेव स्वाभाविकं, अनेकत्वं तु औपाधिकम् । अंतःप्रवेशस्थले तु जलं सरितः भिन्नं सत् घटं प्रविष्टं कुंभजलमिति व्यवह्रियते । तत्र सरित्स्थावस्थायां ऐक्यं, कुंभजलत्वावस्थायां तु भेदः इति भेदोऽपि स्वाभाविकः इति विशेषः ॥

ननु अच्छेद्यस्य परमात्मनः कथं मायानुप्रवेशवशात् छेद्यत्वम् इति चेत्, असकृदिदमुक्तम् । स्वतो निरवयवमपि ब्रह्म स्वेच्छया एकदेशादिविभागं प्रकल्प्य लीलारसमनुभवतीति । आकाशस्य तु जडस्य नैतादृशी शक्तिरस्ति । परमात्मा तु सर्वशक्त इति पूर्वं परमात्मप्रकरण एव प्रसाधितम् । समुद्रजल-

विशेष्यपर्यन्तत्वमाश्रित्य मुख्यत्वेन उपपाद्यन्ते। 'तत्त्वमसि' इत्यादिषु तदादि शब्दा अपि जीवान्तर्यामिब्रह्मवाचकत्वेन एकार्थं अभिदधति। अथापि जीव दु खेन ईश्वरदु ख न सभवतीत्यत्र भाष्यकार 'स्मरन्ति च' (2-3-44)इति सूत्रे 'तत्र य परमात्मासौ स सत्यो निर्गुण स्मृत। न लिप्यते फलैश्चापि पद्मपत्रमिवाम्भसा' 'कर्मात्मा त्वपरो योऽसौ मोक्षबन्धैस्स युज्यते' इत्यादिस्मृते "तयोरन्य पिप्पल स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति" इत्यादिश्रुतेश्च समर्थ यति। तथा च सर्वेषा जीवाना ब्रह्मांशत्वज्ञत्वादिना एकरूपत्वे सत्यपि शिव ज्ञानाधिक्येन तेषु सासारिकबद्धशुद्धवैलक्षण्य सभवति। तदुक्त शिवागमे—

(श्रीक भा पु 277)

बद्धशुद्धादिभेदेन जीवत्रयमिद स्मृतम्।
गुरुदीक्षाविहीनश्च शिवभक्तिविवर्जित ॥
स्वकर्तृत्वाभिमानी तु बद्धस्स पशुरुच्यते।
गुरुदीक्षा परा लब्ध्वा कैकर्यत्रयसयुत ॥
शक्त्यादिसद्गुणोपेत मुमुक्षु रागवर्जित।
शिवाधीन सुधी भक्त शुद्धजीव इति स्मृत ॥
शिवयोगशिवज्ञानविभवानन्दसयुत।
प्रचण्डातपमध्यस्थशुद्धकर्पूरदीपवत् ॥
शिवाकारे पराकाशे कोटिसूर्यप्रकाशके।
विलीनचित्तवृत्तिस्तु मुक्तजीव इति स्मृत ॥
स जीवन्मुक्त इत्युक्तो रागद्वेषविवर्जित — इति ॥

एतादृशवैलक्षण्ययुक्ताना अंशाना स्वरूपविवेचनाया इदमत्र चिन्त नीयम्। अंशाशिशब्दौ अवयवावयविपरौ लोके स्वरसौ। प्रसिद्धार्थत्यागे प्रमाणा भावेन प्रकृतेऽपि जीवब्रह्मणो तादृशावयवावयविभावाङ्गीकरणमेव युक्तम्। ननु तु निरवयवमुक्तम् नथ तदशा जीवा स्यु इति शङ्का सिद्धान्तशिखामणिरेव वारयति। यथा—

एक एव शिवः साक्षात् चिदानन्दमयो विभुः।
अनाद्यविद्यासम्बन्धात् तदंशो जीवनामकः।
देवतिर्यङ्मनुष्यादिजातिभेदे व्यवस्थितः—इति ॥ (5–33)

अनेन अविद्याशक्तिसंबद्धपरमात्मांश एव जीव इति स्वरसतः प्रतीयते। उपपादितं चैतत् तत्रैव– (सि.शि. 5–36–37)

गुणत्रयात्मिका शक्तिः ब्रह्मनिष्ठा सनातनी।
तद्वैषम्यात्समुत्पन्ना तस्मिन् वस्तुत्रयाभिधा।
किञ्चित्सत्त्वरजोभूतं भोक्तृसंज्ञकमुच्यते—इति ॥

एतेन अविद्यापरपर्यायमायाशक्तिप्रविष्टशुद्धचैतन्यमेव जीव इत्युक्तं भवति। तस्मिंश्च जीवे सत्त्वरजोगुणयोरुन्मेष। अतश्च ब्रह्मणोंऽशभूता एव जीवा इति प्रतिभाति। तत्त्वप्रकाशेऽपि "अनुभवति शिव एव पशुभावं आणवतिरोहितात्मगुणः" इति परमात्मन एव शक्तिसङ्कोचेन जीवभावः प्रतिपादितः। शिवाद्वैतमञ्जर्यादावपि मायाप्रविष्टश्चचैतन्यमेव जीव इत्युक्तम्। एवं अग्निविस्फुलिङ्गदृष्टान्ते च अवयवावयविभावप्रयुक्तांशांशित्वमेव वर्तते ॥

माया तु प्रकृतिं विन्द्यात् मायिनं तु महेश्वरम्।
तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत् ॥ (श्वे.4–10)

इति श्रुतावपि जीवस्य परमात्मावयवत्वेन निर्देशः कृतः। एवं एतत्सर्वपर्यालोचनया जीवब्रह्मणोः अवयवावयविभावरूपो मुख्यः अंशांशिभाव एव अङ्गीकृत इति प्रतिभाति। अनुभवसूत्रे

आत्मायं केवलः शुद्धः शिवस्यांशः सदामलः।
नित्यो निरञ्जनः शांतः तस्मादात्मा स्वयं शिवः ॥ (5–3)

इति सुस्पष्टमेव अयमर्थोऽभिहितः। युक्तं चैतत्—यदि च जीवः ब्रह्मावयवो न स्यात् तर्हि मुक्तौ कथं वा जीवब्रह्मणोः ऐक्यं स्यात्। नहि परस्परं अत्यंतविलक्षणयोः ऐक्यं नाम संभवत्। क्षीरजलयोर्यथा मेलनं न तथा

मेव क्रमेण सरिद्रूपतां भजते; अत्रापि सरित्समुद्रयोः अत्यन्तं भेदमेव सर्वे व्यवहरन्ति। एवं अग्नेरुत्पन्नान् विस्फुलिङ्गान् तद्भिन्नानेव सर्वे व्यवहरन्ति। प्रकाशरूपत्वसाम्यात् उभयोरैक्यव्यवहारोऽस्तीति चेत् प्रकृतेऽपि चेतनत्वसाम्यमूलकाभेदस्य जीवेश्वरयोरपि सत्त्वेन न दोषः। एतादृशं ऐक्यं तु अप्रयोजकम्। द्वैतवादेऽपि हि चेतनत्वमात्रकारेण उभयोरैक्यं वर्तत एव। प्रमेयत्वेन सर्वेषामप्यैक्यं सर्वमतेऽपि वक्तुं शक्यम्। अतः तादृशोऽभेद अप्रयोजक इति संसारदशायां मायावशात् विभिन्नं अणुभावं आपन्नं ब्रह्मचैतन्यं जीवपदवाच्यं सन् स्वभावतः ब्रह्मापेक्षया अत्यन्तं भिन्नं सदेव वर्तते। अतः संसारदशायां भेद इत्युपपादनं श्रीकरभाष्यकाराणां युज्यत एव। अत एव ग्रन्थेषु तत्र तत्र "परमात्मनो विभक्तं सत्" इति वाक्यं दृश्यते। यथा शिवाद्वैतमञ्जर्यां "महेश्वराद्विच्छिन्नत्वेन" इति ॥

एवं शुद्धचैतन्यस्येश्वरस्य जीवभावापादकहेतुभूतायाः मायाया मल इति व्यवहारः। मायायाः अनंतविचित्रशक्तिमत्त्वात् अनंता भेदा दृश्यंते। तत्र जीवभावापादकमायाया आणवमल इति व्यवहारः। अणुः जीवः इति जीवे परमात्मभेदबुद्धिं कल्पयत्ययं आणवो मलः। पुण्यपापकर्मसंबन्धहेतुभूतस्य मलस्य कार्मिकमल इति व्यवहारः। पत्नीपुत्रादिषु ममताभिमानजनको मलः मायेयमल इत्युच्यते। एतादृशमलत्रयविशिष्टं जीवचैतन्यं संसारीति व्यवह्रियते। अथवा अयं क्रमः—मायाभिधो मलः निरवयवस्य परमात्मनः चैतन्यैकदेशविच्छेदकः। एवं विच्छिन्नांशे अणुत्वापादको मलः आणवमलः। एवं विच्छिन्नाणुभूतस्य अंशस्य देहसंबन्धापादको मल. मायेयमलः। कर्मसंबंधापादको मलः कार्मिकमलः। एतन्मलत्रयावृतः परमात्मचैतन्यैकदेश एव जीव इति ॥

"सोऽपि मलः शक्तिलवः कश्चन सर्वथा शार्व एव" (तत्वप्रकाशः) इत्यागमोक्त्या परमात्मनः सङ्कुचिता माया शक्तिरेव मलशब्देन व्यवह्रियते। परमात्मा स्वेच्छानुरोधेन स्वप्रकाशमेव शक्तिमहिम्नैव स्वविनोदाय वन्धयति। नान्या काचन बाह्या शक्तिः परमात्मप्रकाशं बध्नीयात्। एवं स्वप्रकाशावरण-

रूपः आणवाख्यो मलः इच्छाशक्तेः सङ्कोचकः, मायेयो मलः ज्ञानशक्तेः सङ्कोचकः, कार्मिको मलः क्रियाशक्तेः सङ्कोचकः। एवं यथा शिवः सहजतया इच्छाज्ञानक्रियाशक्तिविशिष्टः तथा जीवः तत्सङ्कोचभूतैः आणवमायेयकार्मिकमलैः सहजतया आवृतः। अतो जीवः स्वभावतया परमात्मनो भिन्नः, न तु येनकेनचिदुपाधिना। शिवे यथा शक्तिविकासः स्वाभाविकः तथा जीवे शक्तिसङ्कोचः स्वाभाविकः॥

"The inpurity of the Soul is natural and not accidental" इति दासगुप्तमहाशयः जीवस्य मलसंबन्धं स्वाभाविकमिति मन्यते। एवं सत्योऽपि जीवभावः शिवोपासनानैरन्तर्येण मायापाशनिवृत्तिपूर्वकशिवत्वप्राप्त्या स्वयं निवर्तते। अत एव आगमे जीवस्य सत्यत्वं उपपाद्यते—

जीवः सत्यं जगत्सत्यं शिवः सत्यं स्वभावतः।
तयोरभेदः सत्यं वा क्रिमिभ्रमरयोरिव॥
मानवः शिवयोगेन शिवो भवति नान्यथा।
भ्रमद्भ्रमरचिन्तायां कीटोऽपि भ्रमरायते — इति (श्रीकरभाष्य. 274)

अयं विषयो मुक्तिस्वरूपनिरूपणावसरे विशदीक्रियते॥

ननु जीवस्य परमात्मांशत्वे परमात्मनो नित्यशुद्धत्वेन कर्मसंबन्धाभावेन तदंशस्य जीवस्य कार्मिकमलावरणं प्रथमतः कथमिति चेत्, अहो महानाक्षेपः। परमात्मापेक्षया अतिरिक्तं जीवं अभ्युपगच्छतामपि मते जीवः खलु स्वतः शुद्ध इत्येवोच्यते। स्वतः शुद्धस्य जीवस्य कदा प्राथमिककर्मसंबन्ध आसीदित्युच्यताम्। बीजाङ्कुरन्यायेन संसारस्य अनादित्वेन प्राथमिककर्मसंबन्ध इति कथनं तावत्स्येव इति चेत् प्रकृतेऽपि दीयतां सा दृष्टिः। परमात्मनो हि जीवभावः अनादिकालादारभ्यैव वर्तते, संसारस्य अनादित्वात् - "अनाद्यविद्यासंबन्धात् तदंशो जीवनामकः" (सि.शि. 5-34) इति सिद्धान्तशिखामणिवाक्ये अनादिपदप्रयोगः अमुमर्थं स्पष्टयति। अतश्च यश्चोभयोस्समो दोषः इति न्यायेन न सैद्धान्तिकानामेवायं दोषः॥

एवं मायावशात् ब्रह्मणो विभक्तं जीवभावापन्नं मलावृतं चैतन्यं प्रलयकाले न सर्वथा परमात्मनि लीयते, तादृशलयस्य मुक्तावेव संभवात् । किंतु सूक्ष्मदशापन्नः सन् जीवः प्रलयकालेऽपि वर्तत एव । अत एव सिद्धान्तशिखामणौ—'तत्र लीनमभूत्पूर्वं चेतनाचेतनं जगत्' (2-7) इत्यादौ यत्र चेतनाचेतनयोरपि परिग्रहणं दृश्यते । जीवाः परमात्मनि अवसाय पुनः सृष्टिकाले तत्तत्कर्मवासनानुगुण्येन बहिरायान्ति । मुक्तात्मा तु मलाभावेन न पुनरावर्तते । प्रतिप्रलयं जीवस्य सर्वात्मना लये प्रलय एव मुक्तिरिति स्यात् । तत्तु न केनाप्यङ्गीक्रियते ॥

किंच सृष्टेः मूलं च लीलेत्युक्तम् । सूत्रकारोऽपि "लोकवत्तु लीलाकैवल्यम्" (2-1-33) इत्याह । एवं सृष्टेः लीलार्थत्वे लोके चेतनानां विचित्रसुखदुःखभाजां दर्शनेन एतादृशानर्थरूपलीलाप्रसक्तस्य सर्वसमत्वं कथं स्यात् ? कथं वा तस्य करुणासागरत्वं स्यात् । करुणासिन्धुर्भगवान् सुखमयमेव जगत् सृजेत् । नहि कारुणिकः कश्चित् महापुरुषः इतरान् पीडयित्वा लीलाविनोदं अनुभवेत् । इत्याक्षेपे सूत्रकारेण 'वैषम्यनैर्घृण्ये न सापेक्षत्वात्' (ब्र.सू.2-1-34) इति समाधानं उच्यते । स्वेच्छया सृजन्नपि ईश्वरः तत्तत्कर्मानुगुणमेव सुखदुःखादिमत् जगत् सृजति । न तावता ब्रह्मणः स्वातन्त्र्यहानिः । लीलायां प्रवृत्ता राजानोऽपि हि स्वेच्छाकल्पितां व्यवस्थामनुसृत्यैव क्रीडन्ति । न तावता तेषां स्वातन्त्र्यहानिः । एवं प्रकृतेऽपि । अतः तत्तत्कर्मानुगुणसुखदुःखदातुः ईश्वरस्य न वैषम्यं नैर्घृण्यं वा ॥

एतदुपर्यपि इयमाशङ्कोदेति । पुण्यपापरूपं कर्म चेतनानां क्रियानुगुणम् । 'साधुकारी साधुर्भवति, पापकारी पापो भवति' इति श्रुतिः । सर्वसम्मतं चैतत् । प्राथमिकसृष्टौ जीवानां पूर्वकर्मप्रसक्तेरभावेन प्राथमिकी पुण्यपापहेतुभूतवैषम्यप्रवृत्तिः कथम्, तद्धेतुभूतपुण्यपापयोरभावात् । अयमाक्षेपः 'न कर्माविभागात्' (ब्र.सू.2-1-35) इति सूत्रखण्डेन अनूद्यते । जीवानां परमात्मनि लयात् सृष्टेः पूर्वं कर्मैव नास्ति । एवं च जीवकर्मानु-

रोगेनैव विषमं जगत् सृजतीत्येतत् कथम् ? अत्र समाधानं उच्यते 'इति चेन्न अनादित्वात्' इति । अत्र भाष्यम्—(P. 208.) "प्रवाहतरङ्गन्यायेन सृष्टिप्रलयपरंपराया अनवच्छिन्नतया सत्त्वेन प्रपञ्चस्य अनादित्वात्' इत्यादि । सर्वेऽपि दार्शनिका जगतः बीजाङ्कुरन्यायेन अनादित्वमेव अभ्युपगच्छन्ति । न कोऽपि इदंप्रथमतया कालविशेष एव संसारः प्रवृत्त इति वदति । इतरसर्वाक्षेपपरिहाराय विवर्तवादमवलम्बमाना अपि एतद्विषये परं—

जीव ईशो विशुद्धा चित् तथा जीवेशयोर्भिदा ।
अविद्या तच्चितोर्योगः षडस्माकमनादयः ॥

इत्येवं वदंतः संसारानादित्वमेव अवलंबन्ते । तथाच प्राथमिकसृष्टेरेव अभावेन एतावता कालेन जीवाः पृथग्भूता वर्तन्त एव । तेषां कर्माणि वर्तन्त एवेति न वैषम्यादिप्रसक्तिः ॥

अथ यदि जीवास्तत्कार्याणि सदा वर्तन्ते तर्हि प्रलयः कथम् ? प्रकृष्टो लयो हि प्रलयः । तदा हि 'यदा तमस्तन्न दिवा न रात्रिः' इत्यादिना सर्वेषां पदार्थानां अभाव एव कथ्यते इति शङ्कायां 'उपपद्यते चाप्युपलभ्यते च' (ब्र.सू.2-1-35) इति सूत्रखण्डः प्रवृत्तः । अत्र भाष्यम् । प्रवाहतरङ्गन्यायेन जीवानां तत्कर्मणां च अनादित्वेऽपि अविभाग उपपद्यते; यतः ग्रीष्मकाले क्षितौ बीजानामिव जीवानां सूक्ष्मरूपतया अवस्थानेऽपि अविभागव्यवहार उपपद्यते' इति (श्री.भा.209) । अयमर्थः—प्रलयकालेऽपि ब्रह्मणा सह जगतः अविभाग एव लयः, न तु स्वरूपलयः । अविभागो नाम विभागाभावः । एवं च ब्रह्मस्वरूपान्तर्लीनाः पृथक् नोपलभ्यन्ते न व्यवह्रियन्ते च । एतावन्मात्रात् प्रलये ब्रह्मातिरिक्तं किंचिन्नास्ति इति व्यपदेशः । अन्यथा कृतनाशाकृताभ्यागमप्रसङ्गात् । अधिकं तत्रैव भाष्ये अवगन्तव्यम् । विस्तरभयात् परित्यजामः ॥

एतस्मिन्नपि गहने विषये यत्किञ्चित् समाधानं बसवार्यवचने उपलभ्यते । किमर्थं मे भवपाशो भवबन्धश्च समागत इति प्रश्नस्य सः स्वयमेव

उत्तरं ददाति। प्राक्तने जन्मनि "मया शिवो विस्मृतः, गुरुजङ्गमौ निन्दितौ, अत एवाधुना भवपाशबन्धौ समागतौ" इति। एतच्च समाधानं समुचितं भाति। शिवांशो जीवः स्वयं शुद्धोऽपि सन् मायाशक्त्या व्यामोहितः स्वरूपभूतं चिदंशं विस्मृत्य अहङ्कारेण तत्त्वज्ञानिनो विनिन्द्य संसारदावानलदह्यमानः तापत्रयाविष्टः जन्मनो जन्मान्तराण्यधिगच्छति। एवं मायाप्रभावेण शिवस्वरूपविस्मृतिरेव संसारमूलमित्ययं अंशः सर्वादरणीयतया अभ्युपगम्यः। अयमंशः सिद्धान्तशिखामणौ समर्थ्यते--

जीवत्वं दुःखसर्वस्वं तदिदं मलकल्पितम्।
निरस्यते गुरोर्बोधात् ज्ञानशक्तिः प्रकाशते-- इति॥ (18-17)

एतावता प्रपञ्चेन किं साधितम्? प्रलयकालेऽपि जीवानां सूक्ष्मतया अवस्थानं साधितम्। तेन च 'तत्र लीनममभूत् पूर्वं चेतनाचेतनं जगत्'(सि.2-7) इति सिद्धान्तसिखामणि समर्थिता। तथा च ब्रह्मण एव अंशतो जीवभावेऽपि प्रलयकाले चेतनाचेतनविशिष्टमेव ब्रह्म आसीदिति युक्तमेव॥

नन्वेवं तर्हि सर्वेष्वपि ग्रन्थेषु षट्त्रिंशत्तत्वनिरूपणप्रकरणे जीवसृष्टिः प्रतिपाद्यते खलु इति चेत्, न तत्र प्राथमिकोत्पत्तिरुच्यते। वास्तविकस्वरूपकथनमात्रमेव। तथा च प्रलयकाले सूक्ष्मचिदचिद्विशिष्टं ब्रह्म सृष्ट्यनन्तरं स्थूलचिदचिद्विशिष्टं भवतीति निर्णयः संजातः। एतदारभ्यैव मुक्तेः पूर्वावस्थापर्यंतं विशिष्टाद्वैतमतसिद्धप्रक्रिया प्रायः आद्रियते। एवं वस्तुतो जीवानां ब्रह्माभिन्नत्वेऽपि एतावता भेदस्यैव वर्तमानत्वेन सृष्टेरारभ्य मुक्तेः प्राक्कालपर्यन्ते भाग एव व्यावहारिकोऽयं प्रपञ्चो भासते। एतादृशव्यवहारकालविषयिणी प्रक्रिया विशिष्टाद्वैतसम्मतप्रक्रियापेक्षाया नातीव भिद्यते। वास्तविकांशे, मुक्तिविषये परं वैलक्षण्यं वर्तते। अत एव पूर्वं अस्माभिः वास्तविकपरिस्थितिः विशिष्टाद्वैतसिद्धान्ताद्भिद्यते, व्यावहारिकपरिस्थितौ तु नातीव भेद इत्युपपादितम्। श्रीकरभाष्यकारादयस्तु एतत्तत्वविवेचनचतुराः व्यवहारपरिस्थितिनिर्वाहप्रकरणे विशिष्टाद्वैतप्रक्रियां, वास्तविकपरिस्थितिनिर्वाहप्रकरणे

जीवब्रह्माभेदप्रक्रियां च अवलंब्य निर्वाहं उपपादयन्ति । तदेतद्विविच्य ज्ञातुं उपपादयितुं च अशक्ताः यथा यथा व्यवहरन्ति ॥

तदेवं ब्रह्मांशभूतो जीवः आणवमायेयकार्मिकमलवशात् परमात्मनो विभिन्नः पारमार्थिकसुखदुःखादिभाक् भवति । समुद्रतरङ्गादाविव जीवेश्वरयोः स्वभावभेदस्य व्यवस्थितत्वेन जीवगतदोषाणां ब्रह्मणि न प्रसक्तिः; वस्तुतस्तु तेषां दोषत्वमेव नास्तीत्यादिकं पूर्वप्रकरणोपपादितदिशैव ज्ञेयम् । एवमनादेः कालात् ब्रह्मांशभूतस्य जीवस्य स्वरूपावरणहेतुतया मलत्रयं उक्तम् । एवमावृतस्वरूपस्य ब्रह्मगतगुणावरणहेतुः कञ्चुकमिति च पूर्वमुक्तम् । तत्र सर्वशक्त्यावरणहेतुः कला । सर्वज्ञत्वावरणहेतुः विद्या । नित्यतृप्तत्वावरणहेतुः रागः । जन्ममरणरूपकालपरवशत्वहेतुः कालः । विभुतावरणहेतुः नियतिः । एभिः पञ्चकञ्चुकैः आवृतसर्वज्ञत्वादिगुणः ब्रह्मांशो जीवः अणुः अनादेः कालादेव संसरन्नस्ति । विचित्रशक्तियुतमायावशात् अणुत्वादिप्राप्त्या जीवस्य अणुत्वं स्वाभाविकमेव, नतु औपाधिकम् । यथा विस्फुलिङ्गानां अणुत्वं स्वाभाविकं, यथा वा सरितां सरित्वं समुद्रात् अन्यत्वं च स्वाभाविकं, तथा अणुजीवत्वादिकं ब्रह्मान्यत्वमपि जीवस्य स्वाभाविकमेवेति संसारदशायां भेद इति सुष्ठु उक्तं श्रीकरभाष्यकारैः ॥

इदमत्रावधेयम् । संसारदशा हि व्यक्तावस्था । तस्यां परस्परविरुद्धस्वभावयोः जीवशिवयोर्भेदः स्वाभाविकः युक्त्यनुभवगोचरश्च । अजन्ययोः अविनाशित्वस्वभावयोः तयोः अव्यक्तावस्थायां मुक्तिदशायां ऐक्यप्राप्त्या अभेदः श्रुतिप्रमाणसिद्धः । एवं जीवब्रह्मणोः पारमार्थिकः भेदः अभेदश्च कालभेदेन अङ्गीक्रियते अस्मिन् दर्शने । यथा शिवः सर्वज्ञः सर्वकर्ता सर्वशक्तिसमन्वितः उपमातीतः जननमरणरहितः जगद्व्यापको नित्यश्च वर्तते, तथा शिवांशोऽपि किंचिद्ज्ञो किंचित्कर्ता किंचिच्छक्तियुतः अविद्यामोहितः शिवैक्यज्ञानवर्जितो बद्धश्च वर्तते । एवं पारमार्थिकतया भिन्नयोः चित्त्वेन अभिन्नयोः तयोः उपासनामहिम्ना मुक्त्यवस्थायां ऐक्यं संघटते । अतः तयोः व्यक्ता-

वस्थायां न केवलः भेदः, नापि केवलोऽभेदश्च वक्तुं शक्यते । एवं अभेदगर्भितो भेद एव वक्तव्यः । अंशांशिनोः नात्यन्तभेदः न चात्यन्ताभेदश्च । किंतु भेदाभेद एव । अत्र श्रुतियुक्त्यनुभवानां प्रामाण्यं अव्याहतम् । यदि अत्यन्ताभेदः तर्हि अग्निना संपद्यमानः पाकः अग्न्यंशैः स्फुलिङ्गैरपि संजायेत । तन्न शक्यते । यदि अत्यन्तभेदः तर्हि अग्निभिन्नैः जलादिभिः दहनकार्यं यथा न संभवति तथा स्फुलिङ्गैरपि दहनकार्यं नोत्पद्येत । तथा न दृश्यते लोके । अग्निस्फुलिङ्गाः तूलादिकं प्रविश्य दाहकार्यमुत्पादयन्तीति लोके दृष्टम् । एवं शिवजीवयोः यदि अत्यन्ताभेदः तदा सर्वज्ञत्वादयः जीवेऽपि संभवेयुः, यदि अत्यन्तभेदः तदा शिवभिन्नाना घटादीनां यथा ज्ञातृत्वं न संपद्यते तथा जीवानां ज्ञातृत्वं नोपपद्येत । तथा लोके न दृश्यते । जीवानां ज्ञातृत्वात् घटादिवस्तुज्ञानं घटत एव । अतो वस्तुतो भिन्नाभिन्नयोः ज्ञत्वेन अभेदस्यापि सहजत्वात् पारमार्थिको भेदाभेदः अङ्गीक्रियते ॥

तथा च संसारदशायामत्यंतभेदः, मुक्तावत्यन्ताभेदः इति, संसारदशायामपि अंशांशिभावप्रयुक्तौ भेदाभेदविति च सुप्रतिष्ठितम् । तेन च जीवस्य स्वभिन्नपरमात्मोपासनं तद्द्वारा क्रमशो भेदनिवृत्तिः अन्ते परमात्मन्यैक्यरूपात्यन्ताभेदश्च सूपपाद इति सिद्धम् ॥

## अष्टमोऽध्यायः
### जगत्स्वरूपम्

त्रिगुणात्मकस्य जगतः उपादानभूतं त्रिगुणात्मक प्रकृत्याख्यं द्रव्यमिति पूर्वमेवोक्तम् । परंतु अयमत्र इतरदर्शनापेक्षया विशेषः । सांख्यादयः प्रकृतिमेव सर्वमूलकारणमातिष्ठन्ते । वेदान्तिनस्तु स्वतंत्रप्रकृतिद्रव्यस्य उपादानत्वं खण्डयन्ति । रचनानुपपत्त्यधिकरणे (श्रीक.भा. P.162.) 'तदधीनत्वादर्थवत्' इत्यत्र परमात्माधीनत्वादेव प्रकृतेर्जगदात्मना परिणामः इति भाष्ये

साधितम्। परं तु द्वैतमते परमात्मनोऽत्यन्तभिन्ना प्रकृतिरेव उपादानम्, ब्रह्म तु निमित्तकारणमात्रम्, ब्रह्मण उपादानत्वे सविकारत्वप्रसङ्गात् इत्युक्तम्। विशिष्टाद्वैतमते तु ब्रह्मणः निमित्तोपादानत्वोभयाङ्गीकारेऽपि साक्षाद्ब्रह्मण उपादानत्वं नाङ्गीकृतम्। किंतु ब्रह्मणो विशेषणभूतस्य प्रकृतिद्रव्यस्यैव उपादानत्वं अङ्गीकृतम्। प्रकृतिद्रव्यस्य ब्रह्मशरीरभूतत्वेन शरीरस्य उपादानत्वे शरीरिणोऽप्युपादानत्वं सिद्धमेव। कुलालशरीरस्यैव घटादिनिर्मातृत्वेऽपि कुलालः घटकर्ता इति व्यपदिश्यते। तद्वत् प्रकृतेऽपि, इत्युपपाद्यते। एवं च एतन्मते उपादानत्वव्यवहारस्य निर्वाहेऽपि ब्रह्मणः न साक्षादुपादानत्वमस्तीति अस्वारस्यमेव। एतद्दर्शने तु ब्रह्मपरिणामस्य अङ्गीकारात् तादृशास्वारस्यं तु नास्त्येव। ब्रह्मणः परिणामे सविकारत्वादिदोषप्रसक्तिरपि पूर्वमेव ब्रह्मस्वरूपनिरूपणप्रकरणे सुवर्णकुण्डलकूर्माङ्गगङ्गाहिकुण्डलादिदृष्टान्तैः परिहृता। सिद्धान्तशिखामणावपि 'शिवतत्त्वात्समुत्पन्नं जगदस्मान्न भिद्यते' (10-63) इत्यादिना अयमर्थः सदृष्टान्तं प्रसाधितः। एवं च ब्रह्मैव अपरिच्छिन्नशक्त्युपबृंहितं सत् जगदात्मना परिणमते इत्येव एतत्सिद्धान्तः। 'स्वशक्तिप्रचयोऽस्य विश्वं' 'शक्तयोऽस्य जगत्सर्वम्' इति अभियुक्तोक्तिरप्यत्र सङ्गच्छते। अयमंशः दासगुप्तमहाशयेनैवं वर्ण्यते 'God himself by His own will and knowledge and omnipotence transforms Himself into this World There is no inconsistency in God's transforming Himself into the world, though He is partless; for He can do so by various kinds of powers, modifying them according to His own will. He possesses two powers, by one, He has become the world of enjoyables and by the other, the individual souls, the enjoyers, but in spite of this modifiation of Himself, He remains unchanged in His own purity" Das, H.I.Ph. Vol III P.5.

अयमाशयः सिद्धान्तशिखामणावपि प्रतिपाद्यते। 'गुणत्रयात्मिका शक्तिः ब्रह्मनिष्ठा सनातनी। तद्वैषम्यात्समुत्पन्ना तस्मिन् वस्तुत्रयाभिधा'। अत्यन्ततामसो-

पाधि भोज्यमित्यभिधीयते' इति । अत्र 'अत्यन्ततामसोपाधि' इत्यस्य 'परतत्त्वमयोपाधिः ब्रह्मचैतन्यमीश्वरः' इति श्लोके विद्यमानं ब्रह्मचैतन्यपदमेव विशेष्यतया संबध्यते । तथा च अत्यन्ततमोपहितं ब्रह्मैव भोज्यं संजातं इति अभिधीयते । अयं भावः । 'सन् हृदयप्रकाशः' इत्यादिना सर्वत्र जगति सद्रूपस्य ब्रह्मण अनुवृत्तिः सिद्धान्तसम्मता । गीतायामपि 'मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव' (गी. 7-7.) इत्यनेन परमात्मनः सर्वानुवृत्तत्वं सदृष्टान्तं अभिहितम् । एवं च अत्यन्तसत्त्वगुणोपहितं चैतन्यं ईश्वरः, अत्यन्ततमोगुणोपहितं चैतन्यं जगत् । किञ्चित्सत्त्वगुणमिश्ररजोगुणोपहितं चैतन्यं जीव इत्युक्तं भवति ॥

शक्तिविशिष्टं अमूर्तं परब्रह्म लीलया स्वीयज्ञानांशप्रवेशेन शिव इति, क्रियांशप्रवेशेन शक्तिरिति पार्थक्येन व्यवह्रियते । भक्तानुग्रहाय अयमेव शिवः परिगृहीतमूर्तिः ईश्वर इत्यभिधीयते । अतः शिवशक्त्योः अव्यक्तदशायां अभेदः, व्यक्तदशायां भेदः । "शक्तिश्च शक्तिमांश्चैव पदार्थद्वयमुच्यते । शक्तयोऽस्य जगत् कृत्स्नं शक्तिमांस्तु महेश्वरः" (श्रीक.भा.167) इत्युक्तेः । पृथग्भूता इयमेव शक्तिः पार्वतीत्यभिधीयते । 'उमासहायं परमेश्वरं प्रभुम्' (कै.-17) इति कैवल्यश्रुतिः अमुमाशयं समर्थयति ॥

एवं च सिद्धान्तशिखामणिनिर्दिष्ट ईश्वरः परब्रह्मणो निराकारस्य साकारं रूपम् । तत्र परमात्मचैतन्यस्य कार्त्स्न्येनैवाविर्भावः, अतः अत्यंतसत्त्वगुणोपहितं चैतन्यं ईश्वर इत्युक्तम् । ज्ञानं हि सत्त्वगुणस्य असाधारणं कृत्यम् । ईश्वरतत्त्वे सच्चिदानंदस्वरूपस्य ब्रह्मणः कार्त्स्न्येनैव आविर्भावः । जीवस्तु रागादिपरवशः चलस्वभावः । रागादिचांचल्यं च रजोगुणस्य असाधारणं कृत्यम् । अतः रजोगुणोपहितं चैतन्यं जीवः । परंतु जीवस्यापि अल्पचैतन्यस्वरूपत्वेन ईषत्प्रकाशांशसत्त्वात् किञ्चित्सत्त्वरजोगुणोपहितं चैतन्यं जीव इत्युक्तम् । एवं च जीवे सदाकारापेक्षया चिदाकारस्य न्यूनीभावः, चिदाकारापेक्षया आनन्दाकारस्य न्यूनीभावः । अचेतनं तु सर्वथा जडम् । तत्र

सदाकारमात्रस्य भानम् । चिदानन्दाकारयोस्तु सर्वथा तिरोधानमेव । तमोगुणस्य हि आवारकत्वं असाधारणं कृत्यम् । अतः जडवस्तुषु अनुवृत्तं ब्रह्मस्वरूपं सद्रूपमात्रेण भासते । एवं च 'शक्त्योऽस्य जगत् कृत्स्नम्' इति शक्तिमयस्य जगतः परमात्ममयत्वं सुसंघटितं भवति । अयमंशः श्रीकरभाष्ये तत्र तत्र स्पष्टं प्रतिपाद्यते । शक्तिशक्तिमतोरभेद इति न्यायेन शिवस्य स्वशक्त्यंशजगतश्च अनन्यत्वं अङ्गीक्रियते । 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत' (छां.3-14-1) इत्यादि श्रुतिभ्यः शक्त्युपादानकस्य जगतः शिवात्मकत्वं उपदिष्टम् । एतेन रज्जुसर्पवत् जगतो ब्रह्मण्यध्यस्तत्वान्मिथ्या इति अद्वैतमतं निरस्तम् । घटपटवत् जगद्ब्रह्मणोः भेदानङ्गीकारात् द्वैतमतं निरस्तम् । शरीरिशरीरयोरिव संयुक्तभेदाङ्गीकारमतमपि निरस्तम् । 'एतस्माज्जायते प्राणः मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी' (मुं.2-1-3) इत्यादिषु ब्रह्मणो जगद्विलक्षणत्वं, 'ऐतदात्म्यमिदं सर्वं' 'ब्रह्मैवेदं सर्वम्' इति ब्रह्मणो जगदात्मकत्वं च श्रूयते । "आत्मन आकाशः संभूतः" (तै.आ. 1.) इति जगद्ब्रह्मणोः कार्यकारणत्वेन परस्परमित्रत्वं च दृश्यते । सत्यज्ञानात्मकब्रह्मणः अनृतजडदुःखात्मकजगतश्च कथमभेद इति चेत् उच्यते, कृत्स्नस्य जगतः परशिवैककारणत्वात् तदात्मकत्वं सिद्धम् । जलाहरणादिव्यवहारसिद्ध्यर्थं मृदेव अवस्थान्तरसंज्ञां प्राप्नोति । तस्मात् घटाद्यपि मृत्तिकाद्रव्यमेव । मृत्तिकेत्येव सत्यमिति कार्यकारणयोरनन्यत्वम् । यथा ऊर्णनाभिः स्वकार्यतन्तुचक्रं कारणावस्थायां नामरूपविभागानर्हसूक्ष्मरूपेण स्वस्मिन्निधाय कार्यावस्थायां नामरूपविभागार्हस्थूलरूपेण प्रकटीकरोति, तथा परमेश्वरः चिदचिदात्मकं जगत् प्रलयावस्थायां सूक्ष्मरूपेण स्वस्मिन् निक्षिप्य सृष्टिकाले स्थूलात्मकत्वेन प्रकाशयति । अतो जगतः ब्रह्माधीनसृष्टिस्थितिलयवत्त्वं दृश्यते । "ऐतदात्म्यमिदं सर्वम्" इति ब्रह्मकार्यस्य जगतः ब्रह्मात्मकत्वं युक्तमेव दृश्यते । अयं घटः पूर्वम् मृदात्मकत्वेन आसीत् इति प्रत्यभिज्ञानात् कार्यकारणयोरनन्यत्वं युज्यते ॥

"शशशृङ्गेण नागेन्द्रो मृतश्चेदस्त्विदं जगत्। ज्वालाग्निमण्डले पद्म-वृद्धिश्चेदस्त्विदं जगत्। मायाकार्यादिकं नास्ति माया नास्ति भयं नहि। गगने नीलिमासत्ये जगत्सत्यं भविष्यति" (श्रीक.भा.187) इत्यादिषु जगतः शशशृङ्गवद्रूपत्वं प्रतिपाद्य जगन्मिथ्यात्वं उपपाद्यते इतिचेत्, सूत्रकारः—'न प्रतिषेधमात्रत्वात्'इति सूत्रेण समाधत्ते। प्रलये प्रपञ्चस्य स्थूलावस्थानिषेधभानात् बीजाङ्कुरवत् परमेश्वरे स्थितत्वात् तल्लीलया सृष्टिकाले जगत् व्यक्तरूपतां भजते। "नासतो विद्यते भावः नाभावो विद्यते सतः" इति गीतोक्तिरपि सङ्गच्छते। "सत्यज्ञाने घनानन्दे शिवे परमकारणे। चराचरजगज्जालं ग्रीष्म-क्ष्मालीनबीजवत्। सूक्ष्मरूपेण संस्थित्य पुनः स्वस्वचिकीर्षया। स्थूलत्वेन बहिर्याति" इति (श्रीक.भा. 335) आगमोक्तिरपि इममर्थं पोषयति। "धाता यथापूर्वमकल्पयत्" (तै.ना.)इतिश्रुत्या च जगत्सत्यत्वं श्रूयते॥

सूत्रकारोऽपि 'अपि संराधने प्रत्यक्षानुमानाभ्याम्' (ब्र.सू.3-2-23) 'अतोऽनन्तेन तथाहि लिङ्गम्'(3–2–25)इति सूत्रयोः जगतः ब्रह्मात्मकत्वं प्रतिपादयति। संराधनेन सम्यक् बाह्याभ्यन्तध्यानधारणपूजामहिम्ना भक्तानां अधिकारितारतम्येन केषांचित् स्वप्ने केषांचित् जाग्रदवस्थायां मूर्तामूर्तात्मकोभयलिङ्ग-साक्षात्कारः प्रत्यक्षानुमानाभ्यां श्रुतिस्मृतिभ्यां अवगम्यते। "तस्य अभिध्यनात् योजनात् तत्त्वभावात् भूयश्चान्ते विश्वमायानिवृत्तिः" "ज्ञानप्रसादेन विशुद्ध-सत्त्वः ततस्तु तं पश्यति निष्कलं ध्यायमानः"। "यमेवैष वृणुते तेन लभ्य-स्तस्यैष आत्मा विवृणुते तनूं स्वाम्' 'आभ्यन्तरे च बाह्ये च लिङ्गरूपं महेश्वरम्। योऽराधयति शास्त्रेण स आराध्यो महीतले' इत्येवं शिवध्यानधारणपूजाद्युपासकानां शिवानुग्रहात् स्वाभाविकजीवत्वनिवृत्तिपूर्वकशिवत्वप्राप्तिः उपपद्यते। अतः शिवध्यानधारणाद्याराधनादेव अनंतेन चराचरजगदात्मकेन लिङ्गे पर-ब्रह्मैव सर्वत्र प्रकाशते। उपासनकाले उपासकस्य ज्ञानदृष्ट्या मूर्तामूर्तात्मक-ब्रह्मसाक्षात्कारो भवति। तदभ्यासमाहात्म्येन तथैव व्यवहारदशायां प्रपञ्च-दर्शनेन प्रपञ्चः सर्वोऽपि ब्रह्मरूपेण तस्य भाति। अत एव केवलश्रवणमन-

नादीनां ध्यानधारणादीनामिव न तत्साक्षात्कारहेतुत्वम्। तदाराधनप्रयुक्तश्रवणमननादीनामेव तत्साक्षात्कारहेतुत्वमिति निश्चीयते। 'ब्रह्मविद्ब्रह्मैव भवति' इत्यादिश्रुतिष्वपि वेदनशब्देन उपासनज्ञानमेव अभिधीयते, न शास्त्रज्ञानमात्रम्। केवलशास्त्रज्ञानस्य जल्पवितण्डादिवाद एवोपयोगः। 'अनुभूतिं विना मूढः वृथा ब्रह्मणि मोदते। प्रतिबिंबितशाखाग्रफलास्वादनमोदवत्" इति स्वानुभवज्ञानस्यैव फलहेतुत्वं व्यपदिश्यते। इमं श्रीपतिपण्डिताशयं दासगुप्तमहाशयः एवं संगृह्य प्रतिपादयति॥

"Sripathi in commenting upon Brahmasutra(1-1-2,) says that the pure consciousness as the identity of being and bliss is the cause of production and dissolution of the world, as well as its fundemental substratum The Brahman who is formless, can create all things without the help of any external instrument, just as the formless wind can shake the forest" "It is in the intarest of the devotees that God takes all the forms in thich we find Him". Das. H I.Ph. Vol. V., p. 178.

एवं च सर्वाधिष्ठानसच्चिदानन्दपरस्वरूपरशिवब्रह्मणः जगत्कारणत्वात् जगदात्मकत्वं उपपद्यते। 'अपाणिपादोऽहमचिन्त्यशक्तिः पश्याम्यचक्षुः स शृणोम्यकर्णः। अहं विजानामि विविक्तरूपः न चास्ति वेत्ता मम चित्सदाहम्' इत्यादि श्रुतिषु निरवयवस्यापि ब्रह्मणः बाह्यकरणनिरपेक्षतया सर्वकर्तृत्वं सूचितम्। 'आकाशशरीरं ब्रह्म' इत्यत्र आकाशशब्देन तत्स्वाभाविकचिच्छक्तिरुच्यते। 'सत्यात्मप्राणारामम्' इति सत्यात्मा—सत्यस्वरूपः, 'ऋतं सत्यं' इति श्रुतेः। प्राणशब्देन सकलजगदधिष्ठानचिच्छक्तिर्व्यपदिश्यते। तस्यां रमते यत् तत् प्राणारामम्। 'मनआनन्दम्' इति मनःशब्देन पराशक्तिरुच्यते। तस्यां आनन्दो यस्येति बाह्यकारणनिरपेक्षता सूचिता। निरवयवस्य वायोः वृक्षकंपनादिशक्तिः दृश्यते। अनन्तशक्तिविशिष्टस्य अघटितघटनासामर्थ्ये किं वक्तव्यम्? मूर्तस्य प्रभाकरस्य हि अमूर्तकालकल्पना दृश्यते। भक्तानुग्रहार्थं घृतकाठिन्यवत्

दिव्यमङ्गलविग्रहधरस्य महेश्वरस्य मूर्तामूर्तजगदात्मकत्वकल्पनेऽप्यदोष । 'सर्वं खल्विद ब्रह्म' इत्यादिश्रुतौ समुद्रोत्पन्नफेनतरङ्गादिवत् सर्वजगत तदुत्पत्ति स्थितिलयकर्मतया तदात्मकत्व श्रूयते । दासगुप्तमहाशय स्वाशय एव प्रतिपादयति अस्मिन् सन्दर्भे—

"Brahman thus appears in two forms as pure consciousness and as the unconscious material world He is thus with form and without form It is the pure Bramhan that appears as this or that changing entity, as pleasure or pain, as cause and effect Such an explanation would fit in with our experience and would also be perfectly reconcilable with the Scriptural texts"

The world is thus not illusion but reality and of the nature of Siva Himself (Das H I Ph p 178)

"अमृत चैव मृत्युश्च सदसच्चाहमर्जुन" (गी9 19)इति भगवदुक्त्या च सर्वस्य जगत ब्रह्मात्मकत्व युज्यते। अत एव पण्डिता जगति सर्वत्र समदर्शिनो समभावनाश्च वर्तन्ते। ज्ञानिना सर्वत्र ब्रह्मदर्शन च उपपद्यते॥

अयमाशय सिद्धातशिखामणौ स्पष्टमेव उपपाद्यते। यथा—

भोक्ता भोज्य प्रेरयिता वस्तुत्रयमिद स्मृतम्।
अत्र प्रेरयिता शभु शुद्धोपाधिर्महेश्वर ॥
सम्मिश्रोपाधय सर्वे भोक्तार पशव स्मृता ।
भोज्यमव्यक्तमित्युक्तम् शुद्धतामसरूपकम् ॥
अत्यन्तगूढचैतन्य जडमव्यक्तमुच्यते । (5 38–40) इति

अत्र उपाधिशब्दप्रयोगमात्रात् चेतनाचेतनविभाग औपाधिक इति न भ्रमितव्यम् । किञ्चिदुपष्टम्भवशात् कश्चित् किञ्चित् करोति चेत् तत् तस्य औपाधिकमिति न कोऽपि व्यवहरति । यथा नेत्रसद्भावादेव पुरुष यत्किञ्चि ज्ज्ञानानि, न तावता तस्य ज्ञातृत्व औपाधिकम् । कुम्भसबन्धवशादेव

सरिज्जलं कुम्भजलं इत्युच्यते। तावतैव कुम्भजलमिति प्रतीतिः औपाधिकीति न कोऽपि व्यवहरति। अत्र वक्तव्यं सर्वं पूर्वमेवोक्तमिति नेह प्रतन्यते॥

परंतु इदमत्र तत्त्वम्। स्वस्मिन् विद्यमानं विशेषं स्वसंयुक्ते यत् आरोपयति तत् उपाधिरुच्यते। यथा वह्निः स्वसंयुक्ते अयःपिण्डे स्वगतं औष्ण्यं आरोपयति, अतः अयःपिण्डौष्ण्यं औपाधिकमिति व्यवहारो मुख्यः। कुत्रचिन् वास्तविके प्रयोजकेऽपि उपाधिव्यवहारो गौणो दृश्यते। यथा यत्किञ्चित्कार्यार्थं नर. प्रवर्तते चेत् तत्र तूर्ष्णीं स्थितस्य नरस्य प्रवृत्तिप्रयोज-कत्वात् फलस्य उपाधित्वेन कदाचित् गौणो व्यवहारः। एवं प्रकृतेऽपि ब्रह्मणो जीवादिभावप्रयोजकत्वात् सत्त्वादय उपाधय उच्यन्त इति। न तावता चेतनाचेतनविभागः औपाधिको भवति। एवं ब्रह्मण एव जगदात्मना परि-णमनात् सर्वं ब्रह्ममयं इत्यादि श्रुत्यागमाना स्वरसतो निर्वाह. सभवति। श्रुति-रपि "भोक्ता भोग्य प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत्" (श्वे-1-12), इति ब्रह्मैव त्रिविधमित्यभिधत्ते॥

यद्यपि कुत्रचित् ग्रन्थेषु शक्तेरेव जगदात्मना परिणामः, शक्तिश्च परमेश्वराविनाभूता, एव च शक्तेरेव साक्षात् परिणाम्युपादानत्वम्, परमा-त्मनः तदभिन्नत्वात् तस्यापि उपादानत्वव्यवहारः इत्येवमादिरीत्या उपपादनं कृतमिति प्रतिभाति। परंतु अय क्रमः पूर्वोक्तवत् व्यावहारिकप्रपञ्चकालिक-निर्वाहकम इत्येव वक्तव्यम्। साक्षादुपादानत्वे वक्तव्ये तदनङ्गीकरणं च न युक्तम्। पूर्वोक्तश्रुत्यागमविरुद्धं च। सिद्धान्तशिखामणौ हि 'अत्यन्तगूढ-चैतन्यं जडमित्युच्यते' इत्यनेन जडेऽपि चैतन्यानुवृत्ति. तस्यात्यन्त-मावृतत्वं च स्पष्टमुक्तम्॥

अहिकुण्डलाधिकरणे हि अहेः कुण्डलीभावऋजुभाववत् ब्रह्मण एव नानाकारभाक्त्वं स्पष्टमुक्तम्। सरित्सागरन्यायोऽपि एवमेव सङ्गच्छते। अत. परमात्मन एव साक्षादुपादानत्वम्। निर्विकारस्य निरवयवस्य परमात्मनः कथमिदम् इति शङ्कायां तादृशविचित्रशक्तियोगादिति पूर्वमेवोक्तम्। एवं च

अपरिच्छिन्नशक्तिविशेषोपबृंहितं ब्रह्मैव जागदुपादानकारणम्। जगतो विचित्रत्वेन तदनुरोधेन ब्रह्मसहकारिभूता शक्तिरपि विचित्राकारतां प्राप्नोति। तत्र सर्वत्रापि ब्रह्मचैतन्यं अनुवर्तत एव। शक्तिशून्यस्य ब्रह्मणः एतादृशविचित्रानन्तकार्यकरणायोगेन, शक्तिसंबन्धादेव विचित्रकार्यकरणेन च प्राप्ताप्राप्तविवेकन्यायेन शक्तेरेव सर्वकारणत्वं अंततो विश्राम्यतीति शक्तेरुपादानत्वव्यवहारः कुत्रचित्। शक्तेरुपादानत्वेऽपि शक्तेरपि चैतन्यात्मकत्वेन तदुपादानके जगति चैतन्यस्य अनुवृत्तिरङ्गीकरणीयैवेति पूर्वोक्तपक्षतौल्यमेव॥

अत्रेदं तत्त्वम्। "तत्र लीनमभूत्पूर्वं चेतनाचेतनं जगत्" (2-7) इति सिद्धांतशिखामणिवचनेन प्रलयकाले चेतनाचेतनात्मकजगतः परमात्मनि लयः प्रतिपादितः। स च लयः न स्वरूपैक्यम् अपितु अविभागापत्तिरेवेति जीवप्रकरण एवोक्तम्। एवं च प्रलये जीवस्य सूक्ष्मरीत्या अवस्थाने अचेतनपदार्थस्यापि सूक्ष्मरीत्या अवस्थानं अवश्यं अभ्युपगन्तव्यम्। मायाप्रविष्टं ब्रह्मचैतन्यं जीव इति पूर्वमुक्तम्। तत्र मायाया एव अभावे तत्प्रविष्टचैतन्यरूपस्य जीवस्यापि सद्भावः न समर्थयितुं शक्येत। अतश्च सूक्ष्मस्वरूपेण चेतनवर्गस्य अचेतनवर्गस्य च अवस्थानं प्रलयकालेऽप्यवश्यं अङ्गीकरणीयम्। तथा च भोक्तृभोज्यप्रेरकरूपद्रव्यत्रये प्रेर्यवस्तुना अभावेन प्रेरकाकारस्य प्रलये ब्रह्मणि स्वरूपत एव लयः। उपासकानुग्रहार्थं हि तद्रूपग्रहणम्। प्रलये को वा उपासको नाम? अतः तदाकारस्य अत्यन्तलय एव। अवशिष्टयोः भोक्तृभोज्ययोः सूक्ष्मरीत्या अवस्थानं अभ्युपगम्यमेव। षट्त्रिंशत्तत्त्वनिरूपणावसरे प्रतिपादिता प्रक्रिया तु वस्तुस्थितिकथनमात्रमिति प्रागेव निवेदितम्। संसारस्य अनादित्वेन इदंप्रथमतया जीवसृष्टिः, अचेतनसृष्टिश्च नास्त्येवेति पूर्वमुक्तम्। अतश्च शक्तेरवस्थाभूतयोः चेतनाचेतनयोः सूक्ष्मरूपतया अवस्थानमेव प्रलये सिद्धम्। एतत्पदार्थद्वयस्य शक्तिरूपत्वेन इदानीतनाकारस्य प्रलये असत्त्वेन इदं वस्तुद्वयं शक्त्यात्मना प्रलयकाले वर्तत इत्यभिप्रायेण शक्तिविशिष्टं ब्रह्म एकमेव प्रथमं आसीत् इत्यादिव्यपदेशः।

सूक्ष्मचिदचिच्छक्तिविशिष्टं ब्रह्मैव सामान्यतः शक्तिविशिष्टं इत्युच्यते। तथा च प्रलयो नाम सूक्ष्मचिदचिच्छक्तिविशिष्टब्रह्मात्मना अवस्थानम्। तत्र स्थूलचिदचिद्विशिष्टब्रह्म प्रति सूक्ष्मचिदचिद्विशिष्टब्रह्म उपादानम्। इयमेव च विशिष्टाद्वैतमतसम्मता प्रक्रिया। इयं च प्रक्रिया बहुषु स्थलेषु भाष्यादौ अङ्गीक्रियते। एतदभिप्रायेण तु पूर्वमेवास्माभिरुक्तम् व्यक्तावस्थायां विशिष्टाद्वैतमतमेवेति। तर्हि अनयोः को विशेष इति चेत् वस्तुस्वरूपे एव विशेषः। विशिष्टाद्वैतमते चिदचितोः ब्रह्मापेक्षया भिन्नद्रव्यत्वमेव, परं तु ब्रह्मणो अविनाभूतमिदं द्रव्यद्वयम्। शक्तिविशिष्टाद्वैतमते तु वास्तविकदृष्ट्या इदं द्रव्यद्वयमपि ब्रह्मण एव अवस्थाविशेषरूपमिति। एवं ब्रह्मणः साक्षादुपादानत्वाङ्गीकारेणैव जगद्ब्रह्मणोः भेदाभेदौ संभवतः। उपादानोपादेययोर्हि भेदाभेदौ सांख्यादिबहुवादिसम्मतौ। तद्वत् सिद्धान्तेऽपि। किञ्च एवं अनयोः अंशांशिभावसत्त्वेन अंशांशिभावस्य अवयवावयविभाव एव मुख्यत्वेन अवयवावयविनोः भेदाभेद एवेति जगद्ब्रह्मणोः भेदाभेदः सूपपादः॥

अत्रैवमवधार्यम्। नैय्यायिकमते अयुतसिद्धयोः समवायः अतिरिक्तः सबन्ध अङ्गीकृतः। सूत्रकारेण च 'समवायाभ्युपगमाच्च साम्यादनवस्थितेः' (2-2-12) इत्यनेन समवायो निराकृतः। 'समवायस्थान एव भाट्टादिभिः तादात्म्यं संबन्धः अङ्गीकृतः। भेदसहिष्णुः अभेद तादात्म्यमिति तादात्म्यविदः। एवं च ययोः समवायः सबन्धः तयोः तादात्म्यापरपर्यायः भेदाभेद एव सबन्ध इति सिद्धम्॥

क्रियासारे च 'गुणगुणिनोर्भेदाभेदाभ्युपगमात्' इति कथनेन समवायस्थाने भेदाभेद एव अङ्गीकृतः। एवं अंशांशिनोरपि 'अंशो नानेति सूत्रे तु जीवस्य ब्रह्मणोंऽशता। भिन्नाभिन्नत्वमनेस्तु' विस्फुलिङ्गवदीरितम्' (52 p.) इति भेदाभेद एवोपपादितः। उपादानोपादेयभाव एव अवयवावयविभावः। अवयवाः उपादानम्। अवयवि उपादेयम्। तथाच उपादानोपादेययोः भेदाभेद एव सिद्धः इति जगद्ब्रह्मणोः भेदाभेद एव। अहः

एतावता प्रबन्धेन चेतनाचेतनब्रह्मणां स्वरूपं परिशीलितम् । एतदुपयोगश्चायम् । प्रलयकाले स्वस्मिन् लीनमिदं जगत् परमात्मा कारुणिक. जीवाना करणकलेवरादिदानेन ज्ञानविकासं दिस्रु. जगत् सृजति । ईश्वराहितज्ञाना जीवाः समीचीनं ज्ञानं प्राप्य स्वरूपं सम्यगवगम्य मुक्तिं प्राप्नुयुरिति भगवतः आशंसा । जीवास्तु ससारमोचनाय दत्तं करणकलेवरादिकं केवलभोगसाधनं मन्वाना विषयासक्ताः पुन. पुन ससारप्राप्तिहेतुमार्गमेवाचरन्ति । सुखस्यापि बन्धकत्वं 'तत्र सत्त्वं निर्मलत्वात् प्रकाशकमनामयम् । सुखसङ्गेन बध्नाति' इत्यनेन भगवता अभिहितम् । एतत्सर्वं विमृश्य स्वस्वरूपं वस्तुतः परमात्माभिन्नं ज्ञात्वा तादृशस्य स्वस्य दुःखस्य हेतुभूतं ससारतत्त्वं च ज्ञात्वा जीवा. मुक्त्यर्थं यतेयुरिति अभिप्रायेण महात्मभिः एतेषां तत्त्वानां ज्ञानं अवश्यसपाद्यमिति असकृदभिधीयते ॥

## शक्तिस्वरूपम्

## नवमोऽध्यायः

एव तत्त्वत्रयं विचार्य शक्तिस्वरूपं विचारयाम, मया शक्त्या उपबृंहितः परमशिव विचित्रमिदं ससारनाटकं नाटयति । जगति सर्वमपि वस्तुजातं स्वासाधारणयत्किञ्चित्कार्यानुकूलशक्तिविशिष्टमेव दृश्यते । यथा वह्नि स्वासाधारणदाहरूपकार्यानुकूलौष्ण्यशक्तिविशिष्ट एव दृश्यते । तादृशौष्ण्यशक्तेरभावे तस्य वह्निरिति सञ्ज्ञैव न स्यात् । एवं सर्वेष्वपि वस्तुषु तत्तदसाधारणकार्यानुकूला काचन शक्तिर्वर्तत एव । यथा वनस्पतिषु रोगनिवारणशक्ति, वज्रायुधे शिलाभेदनशक्ति, मणिमंत्रादिषु भूतप्रेतबाधपरिहरणशक्ति, ध्वन्याकर्षकयन्त्रे ध्वनिविस्तरणशक्ति, विद्युति नानाविधयंत्रचालनशक्तिः, पिपीलिकाया वृक्षमूलाघ्राणनेन वृक्षाग्रस्थफलनिष्कर्षशक्ति एव ब्रह्मसृष्ट्यन्तर्गतेषु सकलपदार्थेषु एकैका असाधरणा शक्ति लोके सर्वेषां प्रत्यक्षानुभवसिद्धा । अनेन सकलं चराचरं जगत् शक्तिविशिष्टमेवेति निर्धीयते । एतादृशशक्ति-

कुण्डलभूतस्य ऋजुभूतस्य च ह्रस्वत्वदीर्घत्वरूपविरुद्धपरिमाणवत्त्वात् भेदाभेदौ अङ्गीकार्यौ। एवं जगद्ब्रह्मणोः सत्त्वेन एकत्वेऽपि उपादानोपादेयत्वेन भेदाभेदौ अङ्गीक्रियेते। मृद्द्रव्यस्यैव घटावस्थाघटादिनामधेयं च विकारः। यतो घटः मृदेव अतः कारणात् अनन्यदेव कार्यम्। अर्थक्रियादिव्यवहारभेदस्तु मृद्घटयोरवस्थाभेदात् भवत्येव। ततो मृद्घटयोरिव ब्रह्मजगतोरपि व्याप्यव्यापकभावादनन्यत्वम्। तथाच स्मृतिः। 'शक्त्यादिपृथिव्यन्तशिवतत्त्वसमुद्भवम्। तेनैकेन च तद्व्याप्तम् मृदा कुम्भादिकं यथा' इति। यथा मृदय घटः इत्यत्र मृद्व्याप्तिः घटे दृश्यते तथा 'ब्रह्मेदं जगत्' इति ब्रह्मव्याप्तिर्न दृश्यते इति चेत्, घटस्सन् पटस्सन् इति सर्वत्र दृश्यत एवेति पूर्वमुक्तम्। सद्रूपेण ब्रह्मणो व्याप्तिरनिवार्या। सद्रूपेण ब्रह्मणा यदि न व्याप्तं जगत् तदा सत्तास्फूर्तिभ्यां विनाकृतं कथं अस्ति स्फुरति इति दृश्येत? अतः चेतनाचेतनजगतो ब्रह्मणश्च भेदाभेद एव सिद्धः॥

अयं विषयः दासगुप्तमहाशयेनैवं उपवर्ण्यते :—

"Veerashaivism is a kind of Bhedabheda interpre tation of the Brahma Sutra. In the Bhedabheda inter pretation, Ramanuja regards the world and the souls as being organically dependent on God who transcends the world of our experience. According to Bhaskara, the reality is like the ocean of which the world of experience is a part, just as the waves are the parts of the ocean. They are neither absolutely one with it nor different from it. The Veerashaivism is also a type of Bhedabheda interpretation and it regards the absolute reality of the world of experience and the transcendent being which is beyond all experience. Sripathi sometimes adduces the illustration of a coiled snake which in one state remains as a heap and in another state appears as a long thick card. So the world is from one

point of view, different from God and from another point of view, one with God". (Das.H.I.Ph.Vol.V.p.187)

## भेदाभेदयोरविरोधः

ननु परस्परविरुद्धयोः भेदाभेदयोः कथं एकत्रावस्थानम् इति चेत्, न वयमेव भेदाभेदवादिनः। भास्कराचार्यादयोऽपि वर्तन्त एव। तैर्यत् समाधानमुच्यते तदेव अस्माकमपि भविष्यति। किमुच्यते तैः? उच्यते। इदमत्र भास्करभाष्यम् समन्वयाधिकरणे—"यदप्युक्तं भेदाभेदयोर्विरोध इति तत्राभिधीयते। अनिरूपितप्रमाणप्रमेयतत्त्वस्य इदं चोद्यम्।

एकस्यैकत्वमस्तीति प्रमाणादेव गम्यते।
नानात्वं तस्य तत्पूर्वं कस्माद्भेदोऽपि नेष्यते॥
प्रतीयते चेदुभयं विरोधः कोऽयमुच्यते।
विरोधे चाविरोधे च प्रमाणं कारणं मतम्॥
एकरूपं प्रतीतत्वात् द्विरूपं तत्तथेष्यताम्।

ननु शीतोष्णयोर्यथा परस्परं विरोधः तथा भेदाभेदयोः। किमिदमुच्यते नास्ति विरोध इति। अत्रोच्यते—भवतः प्रज्ञापराधोऽयम्, न वस्तुविरोधः। कथं सहानवस्थानं छायातपवत्, भिन्नदेशवर्तित्वं शीतोष्णवत् विरोधो नाम। एतदुभयमिह कार्यकारणयोः ब्रह्मप्रपञ्चयोर्नास्ति। तस्मादुत्पत्तेः, तत्रैवावस्थितेः, तत्रैव प्रलयात्। विरोधे हि त्रयमेतन्नोपपद्येत। शीतोष्णयोः भिन्नाधारवर्तिनोः न कदाचित् उत्पाद्योत्पादकलक्षणः संबन्धः, नाधाराधेयलक्षण इति युक्तस्तयोः परस्परं विरोधः। तस्मात् शीतोष्णवदित्ययुक्तं दृष्टान्ताभिधानम्" इति। एवं प्रमेयसंशोधनेन भेदाभेदयोर्विरोधः भास्कराचार्यैः परिहृतः। उपादानोपादेयभावरहितयोः घटपटाद्योः भेदाभेदः केन वा उच्येत? उपादानोपादेययोस्तु वर्तेते एव भेदाभेदौ। कारणात्मना ऐक्यम्, कार्यात्मना नानात्वम् इति। भाष्यशिवाद्वैतमंजर्यादौ कर्कशतर्कशैल्या विस्तरेण भेदाभेदयोर्विरोधः खण्डितः॥

एतावता प्रबन्धेन चेतनाचेतनब्रह्मणा स्वरूप परिशीलितम् । एतदुप योगश्चायम् । प्रलयकाले स्वस्मिन् लीनमिद जगत् परमात्मा कारुणिक जीवाना करणकलेबरादिदानेन ज्ञानविकास दित्सु जगत् सृजति । ईश्वराहितज्ञाना जीवा समीचीन ज्ञान प्राप्य स्वरूप सम्यगवगम्य मुक्ति प्राप्नुयुरिति भगवत आशसा । जीवास्तु ससारमोचनाय दत्त करणकलेबरादिक केवलभोगसाधन मन्वाना विषयासक्ता पुन पुन संसारप्राप्तिहेतुमार्गमेवाचरन्ति । सुखस्यापि बन्धकत्व 'तत्र सत्त्व निर्मलत्वात् प्रकाशकमनामयम् । सुखसङ्गेन बध्नाति' इत्यनेन भगवता अभिहितम् । एतत्सर्वं विमृश्य स्वस्वरूप वस्तुत परमात्माभिन्न ज्ञात्वा तादृशस्य स्वस्य दु खस्य हेतुभूत ससारतत्त्व च ज्ञात्वा जीवा मुक्त्यर्थं यतेयुरिति अभिप्रायेण महात्मभि एतेषा तत्त्वाना ज्ञान अवश्यसपाद्यमिति असकृदभिधीयते ॥

## शक्तिस्वरूपम्

## नवमोऽध्यायः

एव तत्त्वत्रय विचार्य शक्तिस्वरूप विचारयाम, यथा शक्त्या उप बृहित परमशिव विचित्रमिद ससारनाटक नाटयति । जगति सर्वमपि वस्तु जात स्वासाधारणयत्किञ्चित्कार्यानुकूलशक्तिविशिष्टमेव दृश्यते । यथा वह्नि स्वासाधारणदाहरूपकार्यानुकूलौष्ण्यशक्तिविशिष्ट एव दृश्यते । तादृशौष्ण्य-शक्तेरभावे तस्य वह्निरिति सञ्ज्ञैव न स्यात् । एव सर्वेष्वपि वस्तुषु तत्तदसा धारणकार्यानुकूला काचन शक्तिर्वर्तत एव । यथा वनस्पतिषु रोगनिवारण शक्ति, वज्रायुधे शिलाभेदनशक्ति, मणिमन्त्रादिषु भूतप्रेतबाधपरिहरणशक्ति, ध्वन्याकर्षकयन्त्रे ध्वनिविस्तरणशक्ति, विद्युति नानाविधयन्त्रचालनशक्ति, पिपीलिकाया वृक्षमूलाघ्राणनेन वृक्षाग्रस्थफलनिष्कर्षशक्ति एव ब्रह्मसृष्ट्यन्तर्गतेषु सकलपदार्थेषु एकैका असाधारणा शक्ति लोके सर्वेषां प्रत्यक्षानुभवसिद्धा । अनेन सकल चराचर जगत् शक्तिविशिष्टमेवेति निर्धार्यते । एतादृशशक्ति

विशिष्टजगतो निर्माता परमेश्वरः अद्भुतशक्तिविशिष्ट एवेति सर्वैरनुभूयते। इयं च शक्तिः तत्तद्द्रव्याविनाभूता। नहि औष्ण्यशक्तिः वह्निं विना पृथगवतिष्ठेत्। तथा च कार्यानुकूलापृथक्सिद्धविशेषणं शक्तिरिति शक्तेर्लक्षणं पर्यवसन्नम्। एवं च शक्तेर्विशेषणत्वं, वस्तुनो विशेष्यत्वं च सिद्धम्॥

इयं च शक्तिः परमात्मनि किंरूपा वर्तत इति चेदुच्यते। सच्चिदानन्दस्वरूपः परमेश्वरः अस्मि, प्रकाशे, नन्दामि इत्यनुभवयुक्तः। अयमेव अनुभवः तस्य विमर्शशक्तिरित्युच्यते। यद्ययमनुभवः परमेश्वरे नाङ्गीक्रियते, तर्हि सः स्वप्रकाशोऽपि स्फटिकमिव जडः संपद्येत। सौन्दर्यविशिष्टोऽन्धः यथा स्वसौन्दर्यमनुभवितुं अशक्तो भवेत्, तस्य सौन्दर्यमपि यथा व्यर्थं भवेत् तथा परमेश्वरः स्वीयं सच्चिदानन्दं अनुभवितुं यद्यशक्तो भवत्, तदा स्वीयं सच्चिदानन्दस्वरूपं व्यर्थं आपद्येत। अतः परमेश्वरे सच्चिदानन्दानुभवरूपा विमर्शशक्तिः अवश्यमङ्गीकरणीया। अयं च अनुभवः परब्रह्मणः सहजः स्वभावः, पृथक्कर्तुमशक्यश्च। अनेन परब्रह्म शक्तिविशिष्टमिति सिध्यति। लोकविख्यातः कालिदासमहाकविः रघुवंशे मङ्गलश्लोके—

वागर्थाविव संपृक्तौ वागर्थप्रतिपत्तये।
जगतः पितरौ वंदे पार्वतीपरमेश्वरौ॥ (सर्ग1-1)

इति वदन् शिवशक्तिनित्यसंबन्धं प्रतिपादयति। पार्वतीपरमेश्वरौ साकारौ शक्तिशिवौ परिग्राह्यौ। निराकारे परमेश्वरे या शक्तिः सच्चिदानन्दानुभवरूपा तत्स्वभावतया वर्तते सैव उपासकानां अनुग्रहाय पार्वतीरूपेण विभिद्य विराजते। एवं शब्दं विना अर्थः, अर्थं विना यथा शब्दो नोपलभ्यते तथा शिवं विना शक्तिः, शक्तिं विना शिवोऽपि न वर्तते॥

## शक्तिसद्भावे प्रामाणम्

वह्निं विना औष्ण्यस्य अनवस्थानात्, औष्ण्यं विना वह्नेः अनवस्थानाच्च, उभयोः परस्पराविनाभावे सिद्धे, वह्निस्वरूपातिरिक्तशक्तिसद्भावे किं प्रमाणमिति चेत् अत्रोच्यते। मणिमंत्रादिना वह्नेः दाहकत्वं कदाचित् प्रात-

बद्धं दृश्यते । 'शीतो भव हनूमतः' इति सीतया प्रार्थितो वह्निः हनूमन्तं न ददाह इति रामायणे श्रूयते । वह्निस्वरूपस्य तथैव अवस्थानेऽपि कुतस्तत्र दाहानुदयः । एतेन स्वरूपातिरिक्तं किञ्चित् दाहानुकूलं वस्तु वह्नौ वर्तते । मणिमंत्रादिना च तादृशशक्तिर्नश्यति इत्येव वक्तव्यम् । लोकेऽपि व्यवहरन्ति वह्निस्तु स एव अथापि तस्य दाहशक्तिः नष्टा इति । एवं मूषिकाघ्रातं बीजं इतरसदृशमपि क्षितौ पतितं सत् अङ्कुरं न जनयति, तत्र अङ्कुरजननशक्ते-र्नाशात् इत्यपि लोके व्यवहारो दृश्यते । एवं च वस्तुस्वरूपातिरिक्ता शक्तिः लोकतः युक्तितश्च सिद्धैव । एवं सर्ववस्तुषु शक्तिसिद्धौ, शक्त्युदयानुदयाभ्यां शक्तिशक्तिमतोः भेदस्य च सिद्धौ, तयोः सबन्धो वाच्यः । तत्र तयोः अविना-भूतयोः सबन्धः समवायः इति नैय्यायिकाः । ये तु समवायं नाङ्गीकुर्वन्ति, ते अविनाभाव एव सबन्ध इति वदन्ति । स च भेदाभेदे पर्यवस्यति ॥

दर्शनेऽस्मिन् ब्रह्मशक्त्योः भेदाभेदौ उच्येते ।
" एषा शक्तिः शिवा ह्येतत् शक्तिमानुच्यते शिव. ।
शक्तिशक्तिमतोर्भेदं वदन्ति परमार्थतः ॥
अभेदं चानुपश्यन्ति योगिनस्तत्त्वचिन्तका. ॥"

इति कूर्मपुराणे ब्रह्मशक्त्यो पारमार्थिकौ भेदाभेदौ उक्तौ । "शक्तिश्च शक्तिमांश्चैव पदार्थद्वयमुच्यते" एव परमात्मनः केवलावस्थाया स्वस्था या शक्तिः विमर्शनाम्ना ताद्रूप्येण अभिन्ना वर्तते तस्य लीलावस्थाया क्षुभिता सैव शक्तिः विश्वविस्तारिणी भवति । स्वैकांशेन विश्वाकारता भजते । अत. शक्तिब्रह्मणो भेदाभेदौ अङ्गीक्रियेते, कालभेदेन अवस्थाभेदेन च ॥

एवं सर्वेषामपि यत्किञ्चिच्छक्तिमत्त्वे सिद्धे, विविधविचित्रप्रपञ्चरचना-समर्थस्य परमात्मन तदनुगुणविचित्रशक्तिमत्त्वे किमु वक्तव्यम् । श्रुतिरप्याह भगवती । 'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' (श्वे.6-8) इति । अत्र स्वाभाविकीतिपदेन इयं परमात्मनिष्ठा शक्तिः वन्हौ औष्ण्यवत् स्वरूपानुवर्तिनी न मायाकल्पितेति स्पष्टम् । अतएव शक्तिविशिष्ट-

ब्रह्म एकमेव तत्त्वमित्युच्यते। एतादृशविचित्रशक्तियुतत्वादेव ब्रह्म मयूराण्डरस-न्यायेन विविधभावात्मना परिणामयोग्यं अवतिष्ठते। एतादृशशक्तिविशिष्टतया परिणामादेव तादृशपरमात्मोपादेयेषु सर्वेष्वपि वस्तुषु अल्पाल्पापि शक्तिरूप-लभ्यते। वह्नौ औष्ण्यशक्तिः, जले आप्यायनशक्तिः, पृथिव्यां धारणशक्तिः, मनुष्ये बुद्धिशक्तिः इत्येवं रीत्या तत्तदसाधारण्येन उपलभ्यमाना शक्तिः परमात्मशक्त्यंशकलैव। तथा वदति भगवान् परमात्मा गीतायाम् (10 41)

'यद्यद्विभूतिमत्सत्वं श्रीमदूर्जितमेव वा।
तत्तदेवावगच्छ त्वं मम तेजोंऽशसंभवम्॥ इति

शक्तेरपि वस्तुतः परमात्मचैतन्यरूपत्वात् अत्र तेजःशब्देन शक्तिरेवो-च्यते। प्रतिवस्तु तत्तदसाधारणशक्तेः सत्त्वेन सर्वत्रापि परमात्मशक्त्यंशो वर्तत एवेत्युक्तं भवति। (विष्णुपुराणेऽपि.) (1-3-22)

'शक्तयस्सर्वभावानां अचिन्त्यज्ञानगोचराः' इति सर्वपदार्थेष्वपि शक्तिरभिहिता। इयं च शक्तिः शुद्धावस्थाया ब्रह्मवदेव सच्चिदानन्दस्वरूपा। तथोक्तं सि.शिखामणौ— तदीया परमा शक्तिः सच्चिदानन्दलक्षणा।

समस्तलोकनिर्माणसमवायस्वरूपिणी॥ इति (2-12)

ननु शक्तेः सच्चिद्रूपत्वं युज्यते। आनन्दरूपत्वं कथम् इति चेत्, ब्रह्मापेक्षया अभेदस्यापि सत्त्वादेव तथोक्तिः। ननु तत्रैव सिद्धान्तशिखामणौ 'गुणत्रयात्मिका शक्तिः ब्रह्मनिष्ठा सनातनी'(5-33) इत्यत्र शक्तेःगुणत्रयात्मकत्वं उच्यते। तथा च कथं तस्याः सच्चिदानन्दरूपत्वम्। गुणातीतं खलु तद्रूपम् इति चेदुच्यते। प्रथमं उक्तं यत् तत् शक्तेः स्वाभाविकस्वरूपप्रदर्शनपरम्। अत्र उच्यमाना तु कार्याकारेण परिणमद्ब्रह्मणः प्रपञ्चभावहेतुभूता विमर्श-शक्तिकार्यरूपा मायाशक्तिरुच्यते। सर्वस्यापि शक्तिपरिणामभूतत्वेन मृदयं घटः इतिवत् शक्तिपदेन व्यवहारो युज्यत एवेति न विरोधः॥

ननु शक्तेः जगदात्मना परिणामः कथम्। शक्तिः किं द्रव्यम् उत गुणः? आद्यपक्षे तस्याः परमात्मगुणत्वं न स्यात्। न हि द्रव्यं गुणो भवितु-

मर्हति। द्वितीये तस्याः जगद्रूपद्रव्यात्मना परिणामो न सभवति । नहि कदाचिदपि गुणो द्रव्यं भवितुमर्हति इति चेत्, तार्किकसम्मतद्रव्यगुणरूपसाङ्केतिकविभागमूलोऽयमाक्षेपः । वेदांतिभिः नेयं परिभाषा आद्रियते । विशेषणभूतं वस्तु गुणः । स्वतंत्रं वस्तु द्रव्यम् । अत एव शास्त्रेपु गुणस्य अप्रधानत्वेन, द्रव्यस्य प्रधानत्वेन च व्यवहार । एवं प्रकृतेऽपि शक्तिः परमात्मनि अप्रधानभूता, गुणो भवति । स्वकार्यवर्गभूतजगदपेक्षया प्रधानभूता, द्रव्यमपि भवति । यथा स्वगतरूपाद्यपेक्षया विशेष्यभूतोऽपि घटः 'भूतलं घटवत्' इत्यादौ भूतलापेक्षया विशेषणं भवति तथा प्रकृतेऽपीति न कश्चन दोपः ॥

एवं च शक्ति वस्तुत सच्चिदानन्दरूपिणी, माया तु तत्परिणामभूता । गुणत्रयात्मिका शक्ति समस्तजगत्सृष्टिस्थितिलयकारणभूता परमात्महृदयेमूलाहङ्काररूपेण जगदङ्कुररूपतया च भासते । इयमेव चिच्छक्तिः विमर्शशक्तिरित्यभिधीयते । विमर्शाख्या इयं पराशक्तिः विश्ववैचित्र्यकारिणी ब्रह्मणि प्रतिष्ठिता । अतो ब्रह्म विश्वभाजनं भवति । एवं शक्तिसबन्धादेव ब्रह्मणि प्रभुत्वादिव्यवहारो युज्यते ॥ उक्तं च सिद्धान्तशिखामणौ (विंशतिपरिच्छेदे)

यथा चन्द्रे स्थिरा ज्योत्स्ना विश्ववस्तुप्रकाशिनी ।
तथा शक्तिर्विमर्शाख्या प्रकाशे ब्रह्मणि स्थिरा ॥ ३२ ॥
अन्त.करणरूपेण जगदङ्कुररूपत ।
यस्मिन् विभाति चिच्छक्ति ब्रह्मभूतः स उच्यते ॥ ३६ ॥
विमर्शाख्या पराशक्तिः विश्ववैचित्र्यकारिणी ।
यस्मिन् प्रतिष्ठिता ब्रह्म तदिदं विश्वभाजनम् ॥ ३१ ॥

ननु चैतन्यरूपेयं चिच्छक्ति जीववर्गे चिदाकारेणैव वर्तते । जडे तु गुणत्रयात्मना वर्तत इति कथमिदं युज्येत ? गुणत्रयात्मकत्वं च जडत्वम् । चिदात्मकत्वं च अजडत्वं । तथा च एकैव शक्ति. जडा अजडा च कथं भवितुमर्हति इति चेदुच्यते । शक्तेरेवायं महिमा । शक्तिशब्दो हि तत्तद्वस्त्वसाधारणे सदनुगुणकार्यकारिणि च पदार्थे वर्तते । एवं सति कथं तादृश-

शक्तिः द्रव्यस्येति प्रश्नस्य अवकाश एव नास्ति, तत्तत्कार्यानुरोधेन शक्तेः तत्रतत्र अङ्गीकार्यत्वात् । सेयं शक्तिः कथं विचित्रं कार्यं करोतीति प्रश्ने च शक्तेरपि विचित्रशक्तिमत्त्वे अनवस्था प्रसज्येत । किंच न विलक्षणत्वाधिकरणे सजातीययोरेव कार्यकारणभाव इति नियमः गोमयवृश्चिकोर्णनाभितन्तुप्रभृतिदृष्टान्तैः निराकृतः । ऊर्णनाभेः तन्तुनिस्सरणकार्ये हि ऊर्णनाभिशरीरमात्रं न कारणम् । मृतोर्णनाभिशरीरात् नहि तन्तुरुत्पद्यते । किन्तु शरीरविशिष्टजीवस्यैव तत्र कारणत्वम् । एवं प्रकृतेऽपि शक्तिविशिष्टब्रह्मण एव जगदुपादानत्वम्, न केवलयाः शक्तेः, न केवलस्य ब्रह्मणो वेति ॥

परमात्मनः विचित्रनानाशक्तिविशिष्टत्वेन अघटितघटनासामर्थ्यं उपपद्यते । अचेतनोर्णनाभौ चेतनतन्तुपटोत्पत्तिः, चेतनपुरुषात् अचेतनलोमनखोत्पत्तिः दृश्य । अचेतनगोमयादिषु चेतनवृश्चिकादिक्रिमिकीटोत्पत्तिः मधुमाक्षिकेषु क्रिम्याद्युत्पत्तिः, क्रिमीनां भ्रमरसंसर्गात् भ्रमररूपप्राप्तिश्च अवगम्यते । तस्मात् शक्तिमहिम्ना परमात्मनः सर्वमपि सामर्थ्यं संपद्यते । तादृशशक्तिसंकोचभावेन परमात्मा निर्गुण इति गीयते, स एव शक्तिविकासभावेन अनन्तकल्याणगुणाकर इति प्रशस्यते ॥

*गुणातीता पराशक्तिः सच्चिदानन्दरूपिणी ।*
शिवात्मिका शिवाधीना चिदचिद्विश्वकाशिनी ॥ (श्रीक.भा.315)
सर्वशक्तिमतः साक्षात् शिवात् परमकारणात् ॥
प्रादुर्भवति सृष्ट्यादौ पराशक्तिर्महेश्वरी ।
सादिभोक्तृत्वकाले हि पुरुषात्त्वेन वर्तते ॥
सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।
इति सा श्रूयते यस्मात् तस्मात् शिवमयं जगत् ॥ (श्रीक. p. 341)

इत्येवं अभिज्ञाः शक्तेर्महामहिमातिशयं वर्णयन्ति । इयमेव पारमेश्वरी शक्तिः भवानीनारायणादिशब्दैर्व्यवह्रियमाणा भगवदाज्ञां लीलयैव निर्वहति । एतादृश्यां सकलजगदधिष्ठानचिच्छक्त्यां रमत इति परब्रह्म 'प्राणारामं

मनआनन्दं' इति श्रूयते । एवं विचित्रानन्तशक्तिमत्त्वदेव परमशिवः उपासकानां पुरुषार्थानुग्रहसमर्थोऽपि भवति । अत एवोपसकाः 'एतादृशपरमशिवानुग्रहादस्मन्मनः प्रभृति सर्वं तदायत्तं सत् सन्मार्गे प्रवर्तताम्' इति प्रार्थयन्ते 'यत्परात्परतोऽधीशः तन्मे मनश्शिवसङ्कल्पमस्तु' इति । कूर्मपुराणे शक्तेर्महिमातिशयं एवं वर्णयन्ति पौराणिका. यथा ॥

व्योमसंज्ञा परा काष्ठा ज्ञानरूपातिलालसा ।
स्वाभाविकी च तन्मूला प्रभा भानोरिवामला ॥

एका माहेश्वरी शक्तिः अनेकोपाधियोगत॰ ।
परापरेण रूपेण क्रीडते तस्य सन्निधौ ॥

सेयं करोति सकलं यस्य कार्यमिदं जगत् ।
न कार्यं नापि करणं ईश्वरस्येति सूरयः ॥

अनया परया देवः स्वात्मानन्दं समश्नुते ।
तया सर्वमिदं प्रोतं ओतं चैवाखिलं जगत् ॥

तत्रैवेदं देवीवाक्याम् —सा विद्धि परमा शक्तिं माहेश्वरसमाश्रया ।
अनन्यामव्ययामेका या पश्यन्ति मुमुक्षव. ॥

अहं वै सर्वभूताना आत्मा सर्वान्तरा शिवा ।
शाश्वतैश्वर्यविज्ञानमूर्तिः सर्वप्रवृत्तिका ।
अनन्तानन्तमहिमा ससारार्णवतारिणी॥इति(श्रीक.भा.359)

इयं च शक्तिः पौराणिकप्रक्रियया उमापार्वत्यादिरूपं भजते। श्रौतप्रक्रियया तु 'ब्रह्मविनाभूता कार्योपयोगिनी' इति । परं ब्रह्म हि उपासकाना अनुग्रहाय शिवाभिधं मूर्तिमत् भवति इति उक्तम् । तदा च शक्तिरपि उमादिमूर्ति भजते। क्रियासारे द्वाविंशपरिच्छेदे इयं शक्तिः पुराणप्रक्रियया श्रुतिप्रक्रियया च विस्तरशो वर्णिता.। मायाविद्याप्रकृत्यादिशब्दैः यदभिधीयते तत्सर्वमपि शक्तेः परिणामरूपमेव । परं तु शक्तिविशिष्टस्य शिवस्यैव

उपादानत्वेन ब्रह्मचैतन्यानुवृत्तिस्तु सर्वत्र वर्तत एव । तत्तु चैतन्यं कुत्रचिदुद्भूतम्, कुत्रचिदनुद्भूतमिति तु विशेषः ॥

एवं मायादीनां प्रकृतिकार्यत्वादेव कुत्रचित् शक्तिपदप्रयोगः, कुत्रचित् तत्स्थाने मायादिपदप्रयोगश्च दृश्यते । श्रुतावपि कुत्रचित् 'परास्य शक्तिः' इति शक्तिपदप्रयोगो वर्तते । कुत्रचित्तु 'मायिनं तु महेश्वरं' इति मायाशब्दप्रयोगश्च वर्तते । मायापदार्थविवरणवेलायां तु 'मायां तु प्रकृतिं विद्यात्' इति प्रकृतिपदेन विवरणं क्रियते । एतत्सर्वं उपादानोपादेययोः अभेदसत्त्वेन उपादानवाचिना शब्देन उपादेयबोधनं न विरुद्ध्यत इति अभिप्रायेणोक्तम् । एवं एषां शब्दानां एकस्मिन्नर्थे प्रयोगेण मायाशब्दस्य मिथ्यार्थकत्वं श्रुत्यैव प्रतिक्षिप्तम् । विचित्रकार्यकारिषु मायाशब्दप्रयोगात् प्रकृते तादृश्यां शक्तौ मायाशब्दप्रयोगो न विरुध्यते । विशिष्टाद्वैतिभिरपि "शम्बरासुरसृष्टानां मायानां चक्रायुधेन नाशनस्य पुराणे उक्त्या मायाशब्दो न मिथ्यार्थकः, मिथ्याभूतस्य शस्त्रच्छेद्यत्वासंभवात्" इत्युक्तम् । शक्तिविचारे वक्तव्यं इतरत्सर्वं ब्रह्मविचारेणैव चरितार्थमिति नेह प्रतन्यते ॥

---

## दशमोऽध्यायः

### मुक्तिः मुक्त्युपायश्च (अ) मुक्तेः स्वरूपम्

एवं जीवब्रह्मस्वरूपस्य निरूपितत्वात् मुक्तेः स्वरूपमपि निरूपितप्रायमेव। मुक्तिर्हि स्वस्वरूपाविर्भावः । जीवात्मा च वस्तुतः परमात्मांश इत्युक्तम् । अतो जीवस्य परमात्मभावापत्तिरेव मुक्तिरिति स्वतस्सिद्धम् ॥

अयं तु विशेषः एतत्सिद्धान्ते । पूर्वं जीवप्रकरणे जीवस्य जीवत्वं स्वाभाविकमेव, नतु औपाधिकमित्युपपादितम् । एवं जीवब्रह्मणोर्भेदः स्वाभाविक इति च । एवं सति स्वाभाविकरूपाविर्भावो मुक्तिरित्येतावन्मात्रं एतन्मतरीत्या न युज्यत एव, किन्तु वास्तविकरूपाविर्भाव एव मुक्तिरिति वक्तव्यम् । स्वाभा-

विकं रूपं अन्यत्। वास्तविकं रूपं अन्यत्। यथा इतरदर्शनेष्वपि वास्तविकदृष्ट्या जीवः परिशुद्धो निर्मल एव। अथापि तस्य दुःखत्वादिकमपि स्वाभाविकमेव। नहि दुःखत्वं जीवस्य औपाधिकमिति वक्तुं शक्यम्। 'दुःखाद्यैश्चेतनो जीवः' इति तल्लक्षणाभिधानात्। अत एव कुत्रचिन् ग्रन्थेषु यदि स्वतः जीवस्य दुःखित्वं स्वरूपं तर्हि मुक्तौ कुतो दुःखानुत्पत्तिः? इत्याशंक्य, समाहितम् दुःखहेतुभूतस्य कर्मणः अभावाच्च दुःखम् इति। कारणत्वं च द्विविधम्, स्वरूपयोग्यतारूपं, सहकारियोग्यतारूपं चेति। मुक्तौ स्वरूपयोग्यतायाः सत्त्वेऽपि कर्मरूपसहकारियोग्यताया अभावात् न दुःखोत्पत्तिः इति। एवमेतन्मते ब्राह्मं रूपं वास्तविकं, जैवं रूपं तु स्वाभाविकमिति। ननु स्वाभाविकस्य दुःखित्वस्य मुक्तौ निवृत्तिर्नाङ्गीक्रियते तन्मते। भवन्मते तु स्वाभाविकस्य जीवत्वस्य निवृत्तिः कथं भवेत् इति चेत् कीटस्य यथा वा भावनावशात् भ्रमरत्वप्राप्तिः तथा भविष्यति। किं बहुना। नदीसमुद्रन्यायेनैव ब्रह्मणो जीवभावापत्तिः पूर्वमभिहिता। तत्र समुद्रजलस्यैव मेघैर्वर्षितस्य नदीरूपप्राप्तिः। नद्यां विद्यमाने नदीत्वं औपाधिकमिति वक्तुं को हि वा प्रभवति? तथा सति हि मृज्जन्यस्य घटस्य घटत्वमपि स्वाभाविकं न स्यात्। एवं समुद्रोत्थितानां तरङ्गादीनां तरङ्गत्वादिकं नहि औपाधिकं किंतु स्वाभाविकमेव। सैव नदी यदा सागरं प्रविष्टा तदा तज्जले स्वाभाविकमपि नदीत्वं निवृत्तम्। समुद्रत्वं च प्राप्तम्। एवं प्रकृतेऽपि ब्रह्मणो विभज्य जीवत्वं प्राप्तं चैतन्यं मुक्तौ ब्रह्मणा एकीभूतं सत् जीवत्वं विहाय ब्रह्मत्वं प्राप्नोति इत्यत्र को वा विरोधः?

अस्तोऽपि विविच्य उच्यतामिति चेत् उच्यते। कीटः सत्योऽपि नैरन्तर्यचिन्तनासामर्थ्येन कीटाकारं कीटस्वभावं च परित्यज्य भ्रमराकारं प्राप्नोति। कीटो भ्रमरो भूत्वा पुनः कीटरूपं न भजते। रससंपर्कसामर्थ्येन अयसि अयस्त्वं सहजमपि विनश्यति, सुवर्णत्वं च प्राप्यते। जलं सत्यमपि स्वातिनक्षत्रसमये शुक्तौ पतितं तत्संबन्धसामर्थ्येन जलभावं सहजमपि परित्यज्य अनर्घ्यमुक्ताकारतां भजते। ततः पश्चात् जलरूपं नाधिगच्छति।

एवं अतितुच्छेषु जडपदार्थेष्वपि असाधारणवस्तुसंपर्कसामर्थ्येन सत्यभूतस्यापि स्वभावस्य निवृत्तिः लोके परिदृश्यते। एतच्च सर्वानुभवसिद्धम्। एवं अघटितघटनासमर्थः परमेश्वरः *तदविच्छिन्नोपासनमग्नस्य शुद्धजीवस्य अनादिकालप्राप्तं* शक्तिसङ्कोचरूपं स्वाभाविकं मलं परिहृत्य स्वविलयरूपं ऐक्यसुखं अनुगृह्णातीति सिद्धम्। तदेवैवमभिधीयते आगमिकैः—(श्रीक.भा.105)

भृङ्गध्यानाद्यथा कीटः भृङ्गरूपो भवेत्सदा।
शिवध्यानात्तथा जीवः शिवो भवति नान्यथा॥ इति॥

श्रुतिषु हि 'यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छंति नामरूपे विहाय। तथा विद्वान् नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्' (मुण्डक 3-2-8) इति नदीसमुद्रदृष्टान्त एव मुक्तौ अभिहितः। अयं च दृष्टान्तः एतत्सिद्धान्त एव अक्षरशः समन्वितो भवति। तथा हि—अद्वैतमते ब्रह्मणो जीवभावस्य मिथ्यात्वेन, तन्नामरूपादीनामपि मिथ्यात्वेन 'नामरूपे विहाय' इति न स्वरसम्। हानं हि सत्यस्यैव संभवति। मिथ्याभूतस्य तु निवृत्तिरेव, नतु हानम्। विहाय इत्यस्य निवृत्तिपरत्वं तु लक्षणयैव वक्तव्यं इति अस्वारस्यम्। द्वैतमते सर्वथा भेदेनैव अवस्थानात् सर्वथा अयं दृष्टान्तो न युज्यत एवेति स्पष्टम्। विशिष्टाद्वैतमते नामरूपप्रहाणपूर्वकं परमात्मनि अविभागापत्तेः मुक्तौ अङ्गीकारेण आपाततः सङ्गच्छते। परंतु समुद्रे लीनायाःनद्याः नदीत्वनिवृत्तिपूर्वकसमुद्रत्वप्राप्तिवत् जीवत्वनिवृत्तिपूर्वकशिवत्वप्राप्तेः अनङ्गीकारेण न सर्वांशे दृष्टान्तानुरूप्यम्। यद्यपि श्रीकण्ठाचार्यमते जीवस्य पशुत्वनिवृत्तिपूर्वकशिवत्वप्राप्तिर्वर्ण्यते। यथा सङ्कल्पाधिकरणे (4-4-9) 'पशुत्वव्यावृत्तेः। मलापगमेन हि शिवत्वमेवास्य सिद्धम्' इति। परंतु अनुपदमेव शिवत्वं शिवसादृश्यमेवोक्तम्। यथा तत्रैव 'शिवत्वं नाम निखिलमलसंपर्करहितनिरतिशयमङ्गलास्पदत्वरूपं शिवसदृशस्वभावत्वं' इति। एवं मुक्तस्य जीवस्य अणुत्वनिवृत्तिरपि नाङ्गीकृता। यथा प्रदीपवदावेशाधिकरणे (4-4-15) "घटादिपरिच्छिन्नस्य प्रदीपस्य परिच्छेदापाये स्वप्रभया यथा गृहादिव्याप्तिः तथा मुक्तस्य स्वशक्तितिरोधायकमला-

पाये स्वशक्त्या विश्वव्याप्तिर्भवति" इति। शिवार्कमणिदीपिकायामपि चैतन्यव्याप्तिनिबन्धनमेव मुक्तस्य विभुत्वमिति स्थापितम्। एवं च इदं मतं रामानुजाचार्यमतान्न भिद्यत इति तत्रोक्तं अस्वारस्यं समानम्। एवं च अयं द्दष्टांतः एतत्सिद्धान्त एव अक्षरशः सङ्गच्छते। यतः स्वाभाविकजीवत्वनिवृत्तिपूर्वकब्रह्मत्वप्राप्तिरेव मुक्तिरिति अङ्गीक्रियते, अत एव 'ब्रह्म वेद ब्रह्मैव भवति' इत्यपि सङ्गच्छते। श्रीकरभाष्यादावपि अयमर्थः स्पष्टः॥

इयं च मुक्तिः चतुर्विधा, सालोक्यसामीप्यसारूप्यसायुज्यभेदात्। तत्र ब्रह्मणा सह समानलोकप्राप्तिः सालोक्यम्। ब्रह्मसामीप्यप्राप्तिरेव सामीप्यम्। ब्रह्मसादृश्यप्राप्तिः सारूप्यम्। ब्रह्मणा सह ऐक्यम्, पूर्वोक्तमेव सायुज्यम्। इयमेव परा मुक्तिः। उपासकानां इच्छानुरोधेन हि भगवान् फलं दद्यात्। भगवत्प्रसादादेव च मोक्षः, न तु स्वप्रयत्नादित्यनुपदमुच्यते। एवं च उपासकाः किञ्चित्कालं सालोक्यादिमुक्तिमनुभूय अनन्तरं भगवत्प्रसादादेव सायुज्यं प्राप्नुवन्ति। जगद्व्यापारवर्जोधिकरणं च आद्यमुक्तित्रयविषयमेव। सायुज्यमुक्तिं प्राप्तानां हि ब्रह्मणि अत्यंतं लीनत्वात् जगद्व्यापारप्रसक्तिरेव नोत्पद्यते। जगद्व्यापारः यद्यपि मूर्तशिवेन निरुद्धः। अथापि सर्वत्र अमूर्तशिवसान्निध्यं अवर्जनीयम्। तदाज्ञयैव खलु स निर्वर्त्यते। यथा अमूर्तः शिवः तथा सायुज्यमुक्तः तल्लीनः सदा सर्वत्र विलसति॥

ननु यदि ब्रह्मणा सहैक्यं, तर्हि मुक्तानां पार्वतीपतित्वमपि प्राप्येत इति चेत्, सिद्धान्तापरिज्ञानमूलमिदं चोद्यम्। परं ब्रह्म हि निष्कलं शान्तं निराकारं चिदाकाशं ज्योतिर्लिङ्गं इत्यभिहितम्। तस्य तु पार्वतीपतित्वमपि नास्ति, कैलासवासित्वमपि नास्त्येव। षट्त्रिंशत्तत्वान्तर्गतं यत् साकारं शिवतत्त्वं, तदेव उमापतित्वादिविशिष्टम्। नानेनैक्यं परा मुक्तिः, निराकारब्रह्मैक्यापत्तिरेव मुक्तिः सायुज्याख्या। समुद्रैकदेशस्य तरङ्गाद्यात्मना परिणामवत् परब्रह्मैकदेशांश एव षट्त्रिंशत्तत्त्वात्मना परिणमत इति पूर्वमेवोक्तम्। तत्र समुद्रस्य अधोभागे तरङ्गत्वाद्याकारविदूरः निश्चलो निराकारश्च यो भागो

वर्तते तत्स्थानापन्नेन निराकारेण निर्विकल्पेन परमात्मना साकं ऐक्यमेव मुक्तिः। न तस्य उमापतित्वापत्तिः, नवा जगत्कारणत्वापत्तिः इति न मुक्तस्य उमापतित्वादिप्रसक्तिलेशोऽपि। इतरत्रिविधमुक्तप्राप्यं तु साकारं ब्रह्मैव। अत एव ता मुक्तयः अपरमुक्तयः। एतत्प्राप्तिरेव अर्चिरादिमार्गद्वारा भवति। सायुज्यमुक्तिस्तु न गतिसाध्या। सर्वव्यापके ब्रह्मणि अत्रैव ऐक्यसंभवेन देशविशेषगमनं न ह्यावश्यकम्। साकारं खलु ब्रह्म कैलासादिदेशविशेषे वर्तते। 'तमेवं विद्वानमृत इह भवति' (पुरुषसूक्तम्) 'अत्र ब्रह्म समश्नुते' इत्यादिश्रुत्या इहैव मुक्तिश्रवणात्। अतः उत्क्रान्तिगतिपादौ साकारब्रह्मप्राप्तिरूपापरमुक्तिपरौ॥

यद्यपि आसत्युपक्रमाधिकरणे श्रीकरभाष्ये क्रियासारे च 'अत्र ब्रह्म समश्नुते' इति वाक्यं निरवयवपरशिवब्रह्मोपासकविद्वदुत्क्रान्तिविषयम्, तदुपासनवेलायां यो ब्रह्मानुभवः तद्विषयमप्युपपद्यते इति परस्परविरुद्धं पक्षद्वयं वर्णितमिति प्रतिभाति। अथापि एवमत्र विभागः कर्तव्यः। यदि 'यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः' इत्यादिवाक्यं सायुज्यमुमुक्षुविषयं, तदा न विरोधः। यदि च इतरमुमुक्षुविषयम् तदा उपासनाकालिकब्रह्मानुभवविषयमिति। एवं च सायुज्यमुमुक्षोः नोत्क्रान्तिः, न वा अर्चिरादिगतिरिति॥

यद्यपि विशिष्टाद्वैतिभिरपि परब्रह्मण अविभागापत्तिरूपा मुक्तिः सायुज्यमुक्तिरिति वर्णिता, अथापि एतन्मतयोः एतदन्तरं अवगन्तव्यम्। विशिष्टाद्वैतमते मुक्तावपि जीवब्रह्मणोः भेद एवाङ्गीक्रियत इति विदितमेव। भिन्नयोरपि तयोः अविभागेन अवस्थानं परं अङ्गीक्रियते। स च अविभागः कीदृशः इति चिन्तायां—जीवो हि परमात्मशेषभूतः। अतः भर्तुः पत्नीव परमात्मनो जीवः परतंत्र एव मुक्तावपि वर्तते॥

एतन्मते तु एवं सतीपतिभावापेक्षया *अवस्थानादप्यतिशयितावस्थैव* मुक्तौ वर्ण्यते। तथा हि—उपासकेन भक्तेन साधनीयः उपायमार्गः षट्स्थलशब्देन एतत्सिद्धान्ते व्यवह्रियते। एतत्स्वरूपादिनिरूपणं तु पश्चात् विस्तरेण

भविष्यति । तत्र अंतिमे स्थाने ऐक्यस्थलमिति निर्दिश्यते। अत्र जीवस्य परमात्मनि ऐक्यप्राप्तिप्रकारः परिशील्यते । तत्र नवपर्वभेदा निरूपिताः । अतिमं पर्वत्रयं स्वपराज्ञस्थलं, भावाभावलयस्थलम्, ज्ञानशून्यस्थलमित्युच्यते । तत्र स्वपराज्ञस्थल सिद्धान्तशिखामणौ एव मुक्तम्—

दिक्कालाद्यनवच्छिन्नतेजोरूपसमाश्रयात् ।
स्वपरज्ञानविरहात् स्वपराज्ञस्थल विदु ॥ 20-43
अप्रमेयचिदाकारे ब्रह्मण्यद्वैतवैभवे ।
विलीन किं नु जानाति स्वात्मानं परमेव वा ॥ 20-44
सर्वाकारे चिदानन्दे सत्यरूपिणि शाश्वते ।
एकीभावमुपेताना योगिना परमात्मनाम् ॥ 20-45—इति ॥

भावाभावलयस्थलं चैवमुक्तम् :—

प्रतीयमानौ विद्येते भावाभावौ न कुत्रचित् ।
लिङ्गैक्ये सति यत्तस्मात् भावभावलयस्थलम् ॥ 20-50—इति ॥

ज्ञानशून्यस्थलं चैवमुक्तम् —

परस्परसमापेक्षभावाभावविवेचनम् ।
ज्ञानं ब्रह्मणि यन्नास्ति ज्ञानशून्यस्थलं विदुः ॥
सर्वात्मनि परे तत्त्वे भेदशङ्काविवर्जिते ।
ज्ञानादिव्यवहारोऽयं कुतो ज्ञानं विभाव्यते ॥ 2८-54—इति ॥

एतेषा विमर्शने स्वपराज्ञस्थले सतीपतिभावे अवस्थानं प्रतीयते । अहमिति स्वस्य, अयमिति परस्य च ज्ञानं यतो नास्ति अत स्वपराज्ञस्थलमुच्यते । एतच्च 'तद्यथा प्रियया संपरिष्वक्त' इत्येतत्तुल्यमिति स्पष्टम् । परंतु अत्र स्वपरयोः सत्त्वेऽपि तद्ज्ञानं नास्तीत्युक्तं भवति । विशिष्टाद्वैतिना मोक्षोऽप्यत्रैव पर्यवस्यति । परमात्मन स्वस्य च विभागज्ञानस्य अनङ्गीकारात् । अविभागेन दृष्टत्वाधिकरणे श्रीभाष्ये तथोक्तं । एतस्मिद्धान्ते तु

तदुपरि पर्यङ्कद्वयं वर्तते । तत्र भावाभावलयस्थले पूर्वं विद्यमानः स्वपरविभागोऽपि नश्यति इति प्रतिपाद्यते । तदनन्तरं च स्वपरभेदनाशेऽपि । स्वस्य च त्वन्ता-हन्तादिभावना स्वयमेव नश्यति । एवं शिवे विलीनः सः शिव इव केवलोऽवतिष्ठते । तस्य शिवेतरज्ञानं नोत्पद्यत एव । तथोक्तं तत्रैव ॥

सर्वात्मनि परे तत्त्वे भेदशङ्काविवर्जिते ।
ज्ञात्रादिव्यवहारोऽत्र कुतो ज्ञानं प्रवर्तते ॥
निर्विकारं निराकारं नित्यं सीमादिवर्जितम् ।
व्योमवत्परमं ब्रह्म निर्विकल्पतया स्थितम् ॥
तस्मिन् केवलचिन्मात्रसच्चानन्दैकलक्षणे ।
त्वन्ताहन्तादिसंरूढं विज्ञानं केन भाव्यते ॥
केवलं सच्चिदानन्दप्रकाशाद्वयलक्षणम् ।
निर्विकल्पं पराकाशम् परब्रह्म प्रकाशते ॥
ज्योतिर्लिङ्गे चिदाकारे स्वप्रकाशे निरन्तरे ।
एकीभावमुपेतस्य कथं ज्ञानस्य संभवः ॥ सि.शि. (20-55-60.)

इमे च श्लोकाः तस्मिन्नेव ग्रन्थे द्वितीयपरिच्छेदे ' अस्ति सच्चित्सुखाकारं ' इत्यादिनिष्कलब्रह्मप्रतिपादकश्लोकसमानच्छाया एव वर्तन्ते । अतश्च स्वपराज्ञस्थले स्वपरविभागस्य सत्त्वेऽपि तदज्ञानं, तदनन्तरभावाभावलयस्थले स्वपरविभागस्यापि लयः, अनन्तरं ज्ञानशून्यस्थले त्वन्ताहन्ताद्युल्लेखज्ञानस्यापि निवृत्तिरिति निष्कलनिराकारकूटस्थचैतन्यात्मना अवस्थानमेव परा मुक्तिरिति स्फुटं प्रतीयते । एतादृशसर्वविधज्ञानशून्यत्वादेव शून्यतापत्तिर्मुक्तिरिति व्यवहारः, न तु आत्मनोऽपि विनाशरूपशून्यतापत्तिरिति ॥

एतादृशी ऐक्यदशा वचनशास्त्रे एवं उपवर्ण्यते ।

"ಏನೆಂದೆನಲಿಲ್ಲ, ನುಡಿವ ಹೇಳಲಿಲ್ಲ, ನಿಜದಲ್ಲಿರ್ದ ಬೆರಗು ಕುರುವ ಅರಿವುದೇ ? ಅದು ತನ್ನಲ್ಲಿ ತಾನಿಲ್ಲ, ಏನೆಂದೆನಲಿಲ್ಲದ ಬಯಲು ಅಲ್ಲಿ ಏನನೂ ಅರಸಲಿಲ್ಲ, ಇದಿರಿಲ್ಲ ತಾನಿಲ್ಲ". "ಬಯಲು ಬಯಲು ಬೆರೆದಲ್ಲಿ ಮೇರೆಯುಂಟೆ ಅಯ್ಯ. ಕ್ಷೀರ ಕ್ಷೀರ ಕೂಡಿದಲ್ಲಿ ಮರಳಿ ರೂಹಿಸಿ ಹಿಡಿಯಲುಂಟೆ ಅಯ್ಯ. ನಿಮ್ಮೊಳೊಡವೆರೆದ ನಿಶ್ಚೈಕ್ಯನ

ತೋರುಹು ಮರಳಿ ತೋರಲುಂಟೆ ಅಯ್ಯ. ಆದಿಯಿಲ್ಲದ ಬಯಲು, ಅನಾದಿಯಿಲ್ಲದ ಬಯಲು, ಶೂನ್ಯವಿಲ್ಲದ ಬಯಲು, ನಿಶ್ಶೂನ್ಯವಿಲ್ಲದ ಬಯಲು, ಸುರಾಳವಿಲ್ಲದ ಬಯಲು, ನಿರಾಳವಿಲ್ಲದ ಬಯಲು, ಸಾವಯವವಿಲ್ಲದ ಬಯಲು, ನಿರವಯವವಿಲ್ಲದ ಬಯಲು, ಅಖಂಡೇಶ್ವರನೆಂಬ ಬಯಲಲ್ಲಿಯ ಬಯಲು, ಮಹಾಘನ ಬಚ್ಚಬರಿಯ ಬಯಲೊಳಗೆ ಎಚ್ಚರವಡಗಿ ನಾನೆತ್ತ ಹೋದೆನೆಂದರಿಯೆ." (ವಚನಶಾಸ್ತ್ರಸಾರ 571)

एतादृशं निजैक्यं न सर्वैरपि प्राप्यम् । षट्स्थलसंप्रदाये यः शरणस्थितिं प्राप्नोति स एव ऐक्यं सुखं अनुभवितुं प्रभवति । शरणस्य लक्षणादिकं तत्स्थले निरूप्यते । शरणावस्थापन्नो मानवः शिवानुग्रहेण शिवैक्यसुखं अनुभवति । शरणः पुनर्मानवो न भवति । अयमाशयो बसवार्यवचने सम्यगुपपादितः ।

'ಮಣ್ಣುಮಡಕೆಯಾಗಿ ಮರಳಿ ಮಣ್ಣಾಯಿತೆ ಕ್ರಿಯೆಯುಳಿದು. ಬೆಣ್ಣೆ ತುಪ್ಪನಾಗಿ ಮರಳಿ ಬೆಣ್ಣೆಯಾಯಿತೆ ಕ್ರಿಯೆಯುಳಿದು. ನೀರು ಮುತ್ತಾಗಿ ಮರಳಿ ನೀರಾಯಿತೆ. ಕಬ್ಬಿಣ ಹೊನ್ನಾಗಿ ಮರಳಿ ಕಬ್ಬಿಣವಾಯಿತೆ ಕ್ರಿಯೆಯುಳಿದು, ನಮ್ಮ ಸಂಗನ ಶರಣನಾಗಿ ಮರಳಿ, ಮಾನವನಹರೆ ಕ್ರಿಯೆಯುಳಿದು.' (ಶರಣಸ್ಥಳ 16)

ननु ऐक्यदशायां ज्ञानस्याप्यभावे नैय्यायिकादिसम्मतपाषाणकल्पमुक्तेः किं वैलक्षण्यम्, यदि च न किञ्चिद्वैलक्षण्यं तर्हि तस्य हेयत्वमेव स्यात् । को वा मनीषी पाषाणकल्पमुक्त्यर्थं प्रयतेत ? तस्य कथं वा परमपुरुषार्थरूपत्वम् इति चेन् अस्ति महान् विशेषः । सिद्धान्ते परमात्मस्वरूपं न पाषाणकल्पम् अपि तु सच्चिदानन्दरूपम् । एतादृशात्मन अवस्थानं कथं अपुरुषार्थः स्यात् ? आनन्दो हि परमपुरुषार्थः, अतो न जडभावापत्तिर्मुक्तिः । एतदुक्तं भवति । परं ब्रह्म हि अमूर्तं मूर्तं चेति असकृदुक्तम् । तरङ्गात्मना समुद्रपरिणतावपि अधोभागे समुद्रः स्वस्वरूपेण निश्चलो वर्तत एव । एवं एकदेशेन जगदात्मना परिणतमपि परं ब्रह्म इतरांशैः निर्विकारं अमूर्तं कूटस्थं अवतिष्ठत एव । तादृशभावापत्तिरेव च मुक्तिः ॥

परं तु ब्रह्म सविशेषमेव, न निर्विशेषम् । सविशेषम् विशिष्टं इति च पर्यायः । तथा च अद्वैतमते निर्विशेषब्रह्मभावापत्तिः मुक्तिः । सिद्धान्ते तु सविशेषब्रह्मभावापत्तिः । अथवा विशिष्टशिवाद्वैतप्राप्तिः मुक्तिः । तत्र विशिष्टेत्युक्ते किं तद्विशेषणमिति शङ्कायां चिदचिद्रूपरामानुजमतसम्मतविशे-

पणव्यावृत्तये शक्तिविशिष्टाद्वैतमिति उच्यत इति शक्तिविशिष्टशिवाद्वैतप्राप्तिरेव मुक्तिः। इयमेवअमूर्तशिवैक्यस्थितिः। एवं सत्त्वेन "ब्रह्म वेद ब्रह्मैव भवति" इत्यादि श्रुतिः, नदीसमुद्रदृष्टान्तश्च सङ्गच्छते ॥

## (अ) मोक्षोपायनिरूपणम्

अथ एतन्मते मोक्षोपायः कथ्यते। ज्ञानादेव मोक्षः इति केवलाद्वैतिद्वैतिनौ। कर्मणां तु चित्तशुद्धिद्वारा ज्ञानोत्पादकत्वमात्रमिति अद्वैतिनः। ज्ञानोत्पत्तेः पूर्वं अनुष्ठितानां कर्मणां ज्ञानोत्पादकत्वम्, ज्ञानोत्पत्त्यनन्तरं अनुष्ठितानां तु मुक्तौ आनन्दोत्साहहेतुत्वमिति द्वैतिनः इति तयोर्विशेषः। परं तु ज्ञानमेव मोक्षसाधनम्, तच्च अपरोक्षरूपमिति समानम्। ज्ञानकर्मणोरुभयोरपि मोक्षसाधनत्वमिति भास्करयादवप्रकाशौ। कर्माङ्गकात् ज्ञानात् मोक्ष इति विशिष्टाद्वैतिनः। एवं विवादे, सिद्धान्ते कः पक्षः समाश्रीयत इति चेत् अत्रेदमवधेयम्। विवर्तवादे प्रपञ्चस्य मिथ्यात्वेन, मिथ्याभूतस्य ज्ञाननिवृत्तिसंभवेन ज्ञानमात्रस्य मोक्षसाधनत्वं तन्मते सङ्गच्छते। प्रपञ्चसत्यतावादिमते च न ज्ञानमात्रान्मोक्षः संभवेत्। वस्तुतो जीवस्य 'अहं परमेश्वरांशः' इति ज्ञाने सत्त्वेऽपि सत्यभूतस्य संसारबन्धस्य न तावतोच्छेदसंभवः ॥

यद्यपि प्रपञ्चसत्यतावादिभिरपि नैय्यायिकादिभिः ज्ञानान्मोक्ष आदृतः। परं तु तद्दर्शितरीत्या मुक्तिसाधनं कल्पकोटिकालेनापि असंभवि। यतः तत्त्वज्ञानामिथ्याज्ञाननाशादिक्रमेण पुनः पुण्यपापकर्मविरतौ, प्रारब्धस्य च अनुभवेनैव क्षये च मुक्तिर्वर्ण्यते। एतत् कदा वा स्यात्? अतः एतादृशस्य उपायस्य अतिविलंबितत्वात् विलंबासहमानैः, सर्वस्यापि प्रपञ्चस्य परमात्माधीनसत्तां च जानद्भिः, तत्प्रसादाद्विना मुक्तिःसर्वथा दुर्लभ एवेति मत्वा, अन्यो मार्गो गवेषितः। स एव मार्गः आरम्भकाले भक्तिशब्दाभिधेयः औत्कट्ये सति शरणागतौ प्रपत्तौ वा पर्यवस्यति ॥

ब्रह्मसूत्रे 'पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ' इत्यत्र जीवस्य बन्धः मोक्षश्च परमात्मेच्छाधीन इति स्पष्टमुक्तम्। श्वेताश्वतरेऽपि

'संसारमोक्षस्थितिबन्धहेतुः', इत्यनेन भगवतः संसारहेतुत्वं च स्पष्टमुक्तम् । तत्र मोक्षहेतुत्त्वं च अनुग्रहद्वारेति तत्रैव श्वेताश्वतरे 'जुष्टस्ततस्तेनामृतत्वमेति'। इति भगवत्प्रीतिविषयत्वादेव मुक्तेरमिध्यानादवगम्यते ॥

ब्रह्मसूत्रेऽपि 'तदेकोऽग्रज्वलनम्' इत्यत्र हार्दानुगृहीत इति पदं प्रयुञ्जानेन व्यासमहर्षिणा अनुग्रहमूलकैव मुक्तिरिति स्पष्टमभिहितम् । एतत्सर्वपर्यालोचनायां भगवत्प्रसादं विना मुक्तिः सर्वथा न संभवतीति निर्णीतं भवति । भगवत्प्रसादश्च तस्मिन् महनीयत्वज्ञानात् तदाज्ञानुवर्तनाच्च । तच्च महनीयत्वज्ञानमेव भक्तिः । आज्ञानुवर्तनमेव च कर्म । एवं च भक्तिसिद्धान्ते कर्मज्ञानयोरुभयोरपि आवश्यकत्वं सिद्धम् । सूत्रकारोऽपि 'सहकारित्वेन च' (ब्र.सू.3-4-33.) इत्यादौ कर्मणां अवश्यानुष्ठेयत्वं सिद्धान्तयति । सिद्धान्तशिखामणिः— अन्धपङ्गुवदन्योन्यसापेक्षे ज्ञानकर्मणी ।

ज्ञानेसिद्धेऽपि विदुषां कर्मापि विनियुज्यते ॥ (16-11)

ज्ञानेनाचारयुक्तेन प्रसीदति महेश्वरः ।
शिवेन विहितो यस्मात् आगमैर्धर्मसंग्रहः ॥ (16-14)

तस्मात्तमाचरेद्विद्वान् तत्प्रसादाय कल्पते । (16-60)

इत्यदौ बहुत्र ज्ञानकर्मणोरुभयोरपि भगवत्प्रसादहेतुत्वं उपपादयति । एवं च ज्ञानकर्मसमुच्चयवादएव विश्रांतिः स्पष्टा । एतत्सिद्धन्ते अपरोऽयं विशेषः । ज्ञानकर्मभ्यां सह भावोऽप्यावश्यक इति । भावो हि शिवोऽहंभावः । वस्तुतः शिवस्वरूपोऽहं मायावशात् जीवभावमापन्नः, अतः शिवभावविकासाय यतितव्यमिति विवेकोत्पत्तये भावः आवश्यकः । इतरभक्तिसिद्धान्ते मुक्तौ जीवब्रह्मैक्यानङ्गीकारात् न एतादृशस्य भावस्यावश्यकता । अत्र तु ऐक्यस्यैव मुक्तित्वेन भावोऽपि आवश्यकः । यथा सिद्धान्तशिखामणौ —

शिवोऽहमिति भावो हि शिवतापत्तिकारणम् ।
न ज्ञानमात्रं नाचारः भावयुक्तः शिवो भवेत् ॥

भावकर्मसमायुक्तं ज्ञानमेव विमुक्तिदम् (16-25) इत्यादौ बहुत्र भावकर्मज्ञानानां त्रयाणामपि मुक्तिहेतुत्वं स्पष्टं उपपादितम् ॥

ननु कर्म वर्णाश्रमधर्मरूपम् । एतत्सिद्धान्ते वर्णाश्रमधर्माणामनङ्गीकारात् कथं कर्मणो मोक्षसाधनत्वम् ? तथाह्युच्यते "वर्णाश्रमसदाचारमार्गनिष्ठा-पराङ्मुखः । सर्वोत्कृष्टं स्वमात्मानं पश्यन्योगी तु मोदते" इति॥(सि.शि.15-66) अत एव वचनशास्त्रेषु वर्णाश्रमनिन्दा बहुलमुपलभ्यते इति चेत्, अत्र केचित् एवं अभिप्रयन्ति । तत्रैव सिद्धान्तशिखामणौ—

"वर्णाश्रमादिधर्माणां व्यवस्था हि द्विधा मता ।
एका शिवेन निर्दिष्टा ब्रह्मणा कथिताऽपरा" (10-35)

इति दर्शनेन वर्णाश्रमा एव द्विविधाः, ईश्वरसृष्टाः चतुर्मुखसृष्टाश्चेति । तत्रैव ग्रन्थे द्वितीयपरिच्छेदे--'परमात्मा चतुर्मुखं सृष्ट्वा तस्मै सृष्टिकार्यं आदिष्टवान् । स च सर्जनप्रकारं अज्ञात्वा परमशिवमेव तत्प्रकारं प्रार्थितवान् । परमशिवश्च तस्मै निदर्शनार्थं सर्वं सृष्ट्वा, ततः तत्कार्यं चतुर्मुखाय दत्तवान्' इति कथ्यते । एवं च सृष्टिद्वैविध्यं अङ्गीकृतमेव । अतः ईश्वरसृष्टाः वर्णाश्रमाः अप्राकृताः, चतुर्मुखसृष्टास्तु प्राकृताः । तथा च प्राकृतवर्णाश्रमधर्माभावेऽपि अप्राकृतवर्णाश्रमधर्मसद्भावात् न कर्मणां अप्राप्तिरनाचरणं वा । यत्र कुत्रचित् वर्णाश्रमनिन्दापि इतरप्रशंसार्था, प्राकृतवर्णाश्रमविषयिणीचेति न दोषः । अत एव सिद्धान्तशिखामणौ बहुत्र वर्णाश्रमधर्मा अपि उक्ताः' । 'विहितत्वाच्च आश्रमकर्मापि' इत्यादिसूत्रमप्यत एव गच्छत इति ॥

अन्ये तु — धर्माः द्विविधाः, पतिधर्माः पशुधर्माश्चेति । तत्र यज्ञादि-वर्णाश्रमधर्माः पशुविषयकत्वात् पशुधर्माः । लिङ्गपूजार्चनादयस्तु पतिविषयत्वात् पतिधर्मा इत्युच्यंते । शिवभक्तस्य सतीपतिभावनिष्ठस्य पतिधर्मा एव अनुष्ठेयाः, न तु पशुधर्माः, स्वरूपविरुद्धत्वात् । सती हि पतिकृत्यमेवाचरेत् अतः पशुधर्माणां यज्ञादिवर्णाश्रमधर्माणां अननुष्ठानेऽपि, पतिधर्माणां पूजार्चनादीनां सद्भावात् तैरेव मोक्षः । न हि सर्वे धर्माः एकेनैव अनुष्ठातुं शक्यन्ते,

असम्भवात् । तत्र शिवैकनिष्ठस्य माहेश्वरस्य पतिधर्मा एवानुष्ठेयाः इति न कर्मविलोपप्रसङ्ग इत्याहुः ॥

अत्रेदं बोध्यम् । यज्ञादिकर्माणि हि चित्तशुद्ध्यर्थं विहितानि । अनेकजन्मार्जिततादृशपुण्यसचयं विना एतस्मिन् जन्मनि चित्तशुद्धिमूलकभक्तेरूपत्तिरेव न भवति । अत उत्पन्नभक्तिकस्य आरूढस्य स्वतः चित्तशुद्धिविशिष्टस्य किमर्थं यज्ञाद्यपेक्षा ? न तावता यज्ञादिविधिपरवेदवाक्याना अप्रामाण्यम्, अधिकारिभेदेन तेषां उपादेयत्वात् । तथाहि—वेदो हि सकलजनोद्धारणे न प्रवृत्तः, न तु एकविधमेव अधिकारिणमुद्दिश्य । मनुजास्तु त्रिगुणाविष्टा विचित्रबुद्धय । अतः तत्तदनुगुणं विविधकर्मोपदेशः । तथोक्तं गीतायाम् "त्रैगुण्यविषया वेदाः" (2–41) इति । एवं सर्वे धर्माः सर्वेषा नोपादेयाः इत्यपि आह भगवान्—

यावानर्थ उदपाने सर्वतः सम्प्लुतोदके ।

तावान् सर्वेषु वेदेषु ब्राह्मणस्य विजानतः ॥ इति (गी.2–45)

तटाके विद्यमानं हि जलं पिपासाया सर्वं न पातुं शक्यम् । किंतु यावदपेक्षितमेव । एवं वेदेऽपि ज्ञेयमिति । अन्यथा अभिचारादिकर्माणि वेदोपदिष्टानि सर्वैः आचरणीयानि स्युः । एवं च वर्णाश्रमधर्मा शिवभक्तेतरेषा उपादेयाः । शिवभक्ताना तु—अहिंसा सत्यमस्तेयं ब्रह्मचर्यं दया क्षमा ।

दानं पूजा जपो ध्यानं इति धर्मस्य सङ्ग्रहः ॥ (6–59)

पञ्चधा कथ्यते सद्भिः तदेव भजनं पुनः ।

तपः कर्म जपो ध्यानं ज्ञानं चेत्यानुपूर्वकम् ॥ (9–21)

शिवार्थे देहसंशोषः तपः कृच्छादि नो मतम् ।

शिवार्चा कर्म विज्ञेयं बाह्यं यागादि नोच्यते ॥ (9–22)

जपः पञ्चाक्षराभ्यासः प्रणवाभ्यास एव च ।

रुद्राध्यायादिकाभ्यासो न वेदाध्ययनादिकम् ॥ (9–23)

ध्यानं शिवस्य रूपादिचिन्ता नात्मादिचिन्तनम् ।

शिवागमार्थविज्ञानं ज्ञानं नान्यार्थवेदनम् ॥ (9–24)

इति पञ्चप्रकारोऽयं शिवयज्ञः प्रकीर्तितः । (9-25)
अनेन पञ्चयज्ञेन यः पूजयति शङ्करम् ॥
भक्त्या परमया युक्तः स वै भक्त इति स्मृतः ॥ (9-26)

इत्यादिना (शि-शि) उच्यमानं कर्मैव उपादेयम्, न तदतिरिक्तम् ।

एवं च श्रीकरभाष्यादौ कुत्रचित् यज्ञादीनामनुष्ठेयत्ववचनं तस्य हिंसात्वाभावसमर्थनं च इत्यादिकं भिन्नाधिकारिविषयकमिति ज्ञेयम् ॥

इतरसिद्धान्तेष्वपि अवधूतसन्यासिनां वर्णाश्रमातीतत्वं अङ्गीकृतम् । तेषां सिद्धान्तना वैदिकत्वे अस्यापि वैदिकत्वे का हानिः?

वस्तुतस्तु ज्ञानमार्गे वर्णाश्रमधर्माणां यावत् प्राशस्त्यं न तावत् प्राशत्यं भक्तिमार्गे । वर्णाश्रमाभिमानमूलकाहंकारादिशान्तिर्हि भक्त्यवलंबनेनैव संपादनीया । भक्तिसिद्धांते च वर्णाश्रमापेक्षया भक्तेरेव श्रैष्ठ्यम् ॥

अतएव द्वैतविशिष्टाद्वैतमतयोः हीनवर्णानामपि महाभक्तत्वात् पूज्यता दृश्यते । कनकदासप्रभृतीनां, तिरुप्पाणाल्वारप्रभृतीनां आल्वारशब्दवाच्यानां परमभक्तनां पूजनं प्रशंसनं च तैः क्रियते । एवं शैवसिद्धान्ते पूज्यतमेषु त्रिषष्टिमहापुरुषेषु हीनवर्णाः बहवो वर्तन्त एव । अतो भक्तिमार्गे वर्णाश्रमधर्माणां न तावान् पुरस्कार इति नायं महान् दोषः ॥

एवं भक्तेर्मोक्षसाधनत्वे ज्ञानान्मोक्षप्रतिपादनपराणां वाक्यानां विशिष्टाद्वैतमत इव भक्तेरपि ज्ञानविशेषरूपत्वान्निर्वाहः । एवं ज्ञानकर्मणोरुभयोर्मोक्षहेतुत्वम् 'विद्यां चाविद्यां च यस्तद्वेदोभयं सह । अविद्यया मृत्युं तीर्त्वा *विद्ययाऽमृतमश्नुते' (ई.उ.११)*इत्यत्र स्पष्टमुक्तम् । एवं तत्रैव 'कुर्वन्नेवेह कर्माणि जिजीविषेत् शतं समाः' (ईश ) इति च कर्मणां यावज्जीवमनुष्ठेयत्वमुक्तम् । अतः ज्ञानकर्मभ्यां भावमिश्रिताभ्यां मोक्षः इति सिद्धान्तः । भक्तिस्वरूपादिविचारे वक्तव्यं सर्वं संप्रदायभागे वक्ष्यते ॥

अस्मिन् विषये नन्दीमठमहाशयाः एवमभिप्रयन्ति—

"The individual soul, as in the Trika and the Advaita Vedanta is the supreme Siva under the influence of

Avidya, the removal of which can be achieved not only by jnana, knowledge of the supreme self as in the Advaita Vedanta but also by Kriya, strict observance of prescribed forms. Veerashaivism compares him who observes these prescribed forms, kriya to a blind man and him who has the knowledge of the self alone and no kriya to a lame man; therefore it emphatically insists on the necessity of both Jnana and Kriya to achieve the end."—Handbook of Veerashaivism, (p. 92.)

अयं च ज्ञानकर्मसमुच्चयवादः वचनशास्त्रे दार्ढ्येन प्रतिपाद्यते—
ಕಣ್ಣು ಕಾಲೂ ಎರಡುಳ್ಳವ ದೂರ ಎಯ್ದುವನಲ್ಲದೆ ಕಣ್ಣು ಕಾಲೂ ಎರಡರೊಳಗೆ ಒಂದಿಲ್ಲದವನು ದೂರ ಎಯ್ದಲರಿಯನೆಂಬಂತೆ, ಜ್ಞಾನರಹಿತನಾಗಿ ಕ್ರಿಯೆಯನೆಷ್ಟು ಮಾಡಿದರೇನು, ಅದು ಕಣ್ಣಿಲ್ಲದವನ ನಡೆಯಂತೆ, ಕ್ರಿಯಾರಹಿತನಾಗಿ ಜ್ಞಾನಿಯಾದರೇನು, ಅದು ಕಾಲಿಲ್ಲದವನ ಇರವಿನಂತೆ, ನಿಜಗುರು ಸ್ವತಂತ್ರಸಿದ್ಧಲಿಂಗೇಶ್ವರನ ನಿಜವ ಬೆರಸುವಡೆ ಜ್ಞಾನವೂ ಕ್ರಿಯೆಯೂ ಎರಡು ಬೇಕು–(ವಚನ ಶಾಸ್ತ್ರ p.496.)

ननु यदि ज्ञानकर्मभावानां त्रयाणामपि मोक्षसाधनत्वं तर्हि "तमेवं विद्वान् अमृत इह भवति, नान्यः पन्था विद्यतेऽयनाय" (पु.सू.) "तमेव विदित्वा अतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय"। (श्वेताश्वतर) इत्यादौ ज्ञानातिरिक्तस्य मोक्षसाधनत्वनिरसनपूर्वकं ज्ञानस्यैकस्यैव मोक्षसाधनत्वश्रवणं निरुध्येत। शास्त्रकारोऽपि 'पुरुषार्थोऽतः शब्दात्' (3-4-1) इत्यत्र अतः विद्यात एव पुरुषार्थः इति स्पष्टं वदति। अतः त्रयाणामपि मोक्षसाधनत्वं कथमिति चेत्; अत्र केचित्—पुरुषार्थाधिकरणे विहितत्वाधिकरणे च कर्मणा ज्ञानाङ्गत्वं भाष्ये स्पष्टं प्रतिपादितम्। तत्र यद्यपि ज्ञानकर्मोभयानुष्ठानं सर्वेषा आश्रमिणा विधेयम्' इति भाष्ये ज्ञानकर्मसमुच्चयशब्दः प्रयुक्तः। अथापि पूर्वं उत्तरत्र च कर्मणामङ्गत्वस्य ज्ञानस्य अङ्गित्वस्य च स्पष्टं प्रतिपादनेन समुच्चयः न समसमुच्चयः, अपि तु अङ्गाङ्गिभावसमुच्चय एव। कर्मज्ञानयोरङ्गाङ्गिभावेऽपि अङ्गिनो यत्फलं तदेव अङ्गस्यापि फलमिति न्यायेन कर्मणोऽपि मोक्षसाधनत्वं न विरुध्येत। सिद्धान्तशिखामणौ 'अन्धपङ्गुवद्-

न्योन्यसापेक्षे ज्ञानकर्मणी ' इति कथनेऽपि, उपसंहारे " ज्ञानेनाचारयुक्तेन प्रसीदति महेश्वरः " (सि.शि. *16-14.*) इत्यत्र आचारयुक्तेन ज्ञानेन इति निर्देशात् ज्ञानस्य प्राधान्यं प्रतीयत एव । ज्ञानस्य प्राधान्ये कर्मणः अङ्गत्वं स्वतः प्र प्तोत्येव । यदि ' अन्धपङ्गुवत् ' इत्यादिश्लोकमात्रात् ज्ञानकर्मणोरुभयोरपि मोक्षसाधनत्वं वक्तव्यमित्याग्रहः, तर्हि " शिवोऽहमिति भावो हि शिवतापत्तिकारणम् । न ज्ञानमात्रं नाचारो भावयुक्तः शिवो भवेत्" (सि.शि. 16-16.) इत्यत्र भावस्यापि मोक्षसाधनत्वकथनेन ज्ञानकर्मभावानां त्रयाणामेव समुच्चयः वक्तव्यो भवेत् । अतः ज्ञानमेव साक्षात् मोक्षसाधनं, भावः कर्म च तदङ्गं, अङ्गिफलं अङ्गस्यापि इति न्यायेन कर्मज्ञानयोरपि मोक्षसाधनत्वात् तथा व्यपदेशः । अतः कर्मज्ञानयोरङ्गाङ्गिभावसमुच्चयो विवक्षितः, न समसमुच्चयः । तथा च कर्मणः अप्रधानत्वेन, स्वातन्त्र्येण तस्य मोक्षसाधनत्वाभावात् 'नान्यः पन्था विद्यतेऽयनाय' इत्यत्र ज्ञानातिरिक्तस्य मोक्षसाधनत्वनिषेधो न विरुध्यते इति श्रुतिसूत्रागमानां सामरस्यं इति वदन्ति ।

> नान्यः पन्थेति वाक्येन मार्गान्तरनिषेधतः ।
> तेषां विद्याङ्गता प्रोक्ता नान्यथेति विनिश्चयः ॥ (8-16.)

इति क्रियासारेऽपि कर्मणां विद्याङ्गत्वमुक्तम् ।

अपरे तु धर्मो हि द्विविधः, पशुधर्मः पतिधर्मश्चेति तत्र पशुधर्माणां मोक्षसाधनत्वं निषिध्यते । पतिधर्माणां तु ज्ञानान्तर्गतत्वेन केवलकर्मरूपत्वं नास्त्येव, किन्तु ज्ञानरूपत्वमपि वर्तते । अतो ' नान्यः पन्थाः ' इत्यत्र न पतिधर्माणां मोक्षसाधनत्वनिषेधः इति ज्ञानकर्मसमुच्चयवाद एव युक्तः, संप्रदायसिद्धत्वात् । शिवोऽहमिति भावस्य तु ज्ञानरूपत्वेन ज्ञान एवान्तर्भाव इति सिद्धान्तशिखामणिरपि युज्यत इत्याहुः । तदेवं एतद्दर्शनसिद्धान्ते प्रधानानि प्रमेयानि प्रमाणयुक्तिसंप्रदायपुरस्सरं निरूपितानि ॥

## एकादशोऽध्यायः

### सर्वश्रुतिसमन्वयप्रकारः

तदेवं प्रमाणयुक्तिसंप्रदायादिप्रदर्शनपुरस्सरं एतत्सिद्धान्तस्य तत्त्वं सामान्यतो विशेषतश्च परीक्षितम् । स चायं सिद्धांतः सर्वश्रुतिसमन्वयोद्देशेन प्रवृत्त इति प्रागेवोक्तम् । तमिममंशमत्र प्रतिपादयामः । उपनिषद्वाक्येषु अर्थविचारविषये न सर्वत्र दार्शनिकानां विवादः, किन्तु क्वचिदेव स्थले मिथोऽभिप्रायभेदः । तादृशानि वाक्यानि अल्पान्येव । तेषां समन्वये प्रदर्शिते सर्वश्रुतिसमन्वयः प्रदर्शितो भवेत् । एवं सर्वश्रुतिसमन्वयोऽस्मिन्नेव दर्शने, नेतरेष्विति विमर्शनेन इतरदर्शनानां अस्य च साम्यवैषम्यादिकं स्पष्टं भवेत् । सर्वश्रुतिसमन्वये प्रथमं इदमवधेयम् । उपनिषत्सु ब्रह्मज्ञानेन सर्वमपि ज्ञातं भवतीत्युच्यते । इदमेव एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानमित्युच्यते । ब्रह्मणि ज्ञाते सर्वमपि कथं ज्ञातं भवेत् इति प्रश्ने यदुत्तरं उच्यते वेदान्तिभिः तत्रैव तत्सिद्धान्तसर्वस्वमप्यन्तर्गतं भवति । एकविज्ञानेन सर्वविज्ञाननिर्वाहप्रक्रियथैव तत्तत्सिद्धान्तासाधारणं स्वरूपं सम्यक् प्रकटितं भवेत् । अतः उपनिषत्प्रस्थाने एकविज्ञानेन सर्वविज्ञाननिर्वाहः महत्तरः । तदिदं कस्मिन् मते स्वरसमिति निरूपणेनैव सर्वश्रुतिसमन्वयोऽपि निरूपितप्रायो भवेत् । अतस्तदप्यत्र विचार्य विवादग्रस्तानि वाक्यानि विभज्य प्रदर्श्य, तेषां इतरदर्शनसिद्धं समन्वयं चाभिधाय, तत्समनन्तरमेव सिद्धान्तेऽस्मिन् तोलनात्मकदृष्ट्या सर्वश्रुतिसमन्वयं प्रदर्शयामः ॥

एतादृशविवादग्रस्तवाक्यानां निर्वाहक्रम एव वेदान्तदर्शनेषु महान् विषयः । अत्रैव मतभेदानामुत्थितिश्च । एतद्विचारपरिज्ञानमन्तरा वेदान्तस्वरूपनिर्णय एव न संभवेत् । विरुद्धार्थप्रतिपादकानां श्रुतिवाक्यानां परस्परविरोधपरिहारद्वारा सर्वश्रुतिसमन्वयः यथाकथंचित् साधनीयः । अतोऽयं

विचारः प्रथमपरीक्षणीयः । तत्र प्राधान्येन चतुर्धा अविरोधं निर्वहन्ति वेदान्तिनः । तत्रैकः पक्षः अभेदवादिनाम्, अपरः प्रकारः भेदवादिनां, इतरः प्रकारो विशिष्टाद्वैतिनाम्, अन्यश्च प्रकारः शक्तिविशिष्टाद्वैतिनामिति संक्षेपः ॥

1. प्रथमतः कारणवाक्यविषयिणी चर्चा—अत्र 'सर्वं खल्विदं ब्रह्म' (छा.3-14-1), 'एकमेवाद्वितीयं ब्रह्म' 'सदेव सौम्येदमग्र आसीत्' (छा. 6-2-1), 'आत्मैवेदमग्र आसीत्' (ऐतरेय), इत्यादि कारणवाक्यानि विवादविषयतां भजन्ते । एवं 'इदं सर्वं ब्रह्म', 'आत्मैवेदम्' इत्यादिश्रवणात् विचित्रस्य प्रपञ्चस्य कथं ब्रह्मात्मकत्वं च परत्वं युज्यत इति ।

तत्र 'सदेव सौम्येदं' इत्यादिकारणवाक्यावगतमेकत्वमेव पारमार्थिकं, अनेकत्वं तु अविद्याकल्पितत्वादपारमार्थिकमित्यद्वैतिनोऽभिप्रयन्ति । एकमेवाद्वितीयमित्यनेन हि स्वसजातीयविजातीयस्वगतभेदशून्यत्वं कथ्यते । तेन च जगतो मिथ्यात्वं ब्रह्मणः निर्विशेषत्वं च सिद्धमिति ते वदन्ति । एतन्मते सृष्ट्यादिवाक्यानां कल्पितार्थबोधकत्वमेव ॥

द्वैतिनस्तु—सृष्टेःप्रागपि इदं सर्वं सद्रूपमेवासीदित्यर्थकं तद्वाक्यं विवृण्वन्ति । अद्वितीयमित्यस्य च स्वसजातीयद्वितीयरहितमित्यर्थः । एतेन अर्थसंकोचः कथितो भवति ॥

विशिष्टाद्वैतिनस्तु—एकं—अविभक्तनामरूपापन्नं अद्वितीयं—स्वसजातीयद्वितीयरहितं इति वर्णयन्ति ॥

सिद्धान्ते तु 'सदेव सौम्येदमग्र आसीत्' इत्यादिकारणवाक्यानां विशिष्टाद्वैतमतवदेव निर्वाहः । परन्तु व्यावहारिक्यां मध्यमावस्थायामेव । वास्तविक्यामवस्थायां तु चिदचितोः स्थाने तयोर्द्वयोरपि सूक्ष्मकारणभूता मयूराण्डरसवत् स्वविलीनविचित्रचराचरप्रपञ्चा सूक्ष्मदशापन्ना शक्तिर्माह्या।तथा च सूक्ष्मदशापन्नशक्तिविशिष्टं ब्रह्म एकमेव प्रलये आसीत् इति ऐक्यव्यपदेशनिर्वाहः । तादृशशक्तेः विकासदशायां नानात्वव्यपदेशः व्यक्तरूपतापत्तिश्च ।

शाङ्करमते बहुभवनस्यैव मिथ्यात्वात् तादृशश्रुतीनां निर्वाहः क्लिष्ट एव। द्वैतमते ब्रह्मण उपादानत्वानङ्गीकारात् एकस्यैव ब्रह्मणः बहुभवनं सर्वथा न संभवत्येव ॥

2. एवं—द्वासुपर्णौ (मु.3-1-1)-ऋतं पिबन्तौ (कठ. 1–3–1) इत्यादौ जीवब्रह्मणोः भेदः कुत्रचित् कथ्यते। 'तत्त्वमसि' (छा.6-8-7,) 'अहं ब्रह्मासि' (बृ. 3–4–10) इत्यादौ तयोरभेदश्च कथ्यते। अतः जीवब्रह्मणोः भेदः अस्ति न वा इति संशयः उदेति ॥

जीवब्रह्मणोरभेदपरवाक्यान्येव प्रमाणानि, भेदपराणि तु कल्पितभेद-बोधकानि इति अद्वैतिनः। द्वैतिनस्तु भेदपरवाक्यान्येव मुख्यार्थानि, अभेद-पराणि तु सादृश्यादिनिबन्धनान्यौपचारिकाणीत्याहुः ॥

विशिष्टाद्वैतिनस्तु जीवब्रह्मणोः शरीरशरीरिभावात् शरीरवाचिना मनुष्यादिशब्देन जीवबोधनवत् परमात्मशरीरभूतजीववाचकशब्देन परमात्मानः अभिधानात् 'अहं ब्रह्म' इत्यादिव्यपदेशः। भेदश्च तयोर्वास्तविको वर्तत एवेति वदन्ति ॥

शक्तिविशिष्टाद्वैतमते च जीवब्रह्मणोर्भेदविषये व्यक्तावस्थायां विशिष्टा-द्वैतमतवदेव निर्वाहः। श्रीकरभाष्ये जीवेश्वरयोः शरीरशरीरिभावनिबन्धन-सामानाधिकरण्यव्यपदेशः प्रतिपाद्यत एव अंशाधिकरणे। सिद्धान्त शिखामणावपि जगतो ब्रह्मशरीरत्वं स्पष्टमुक्तम्। यथा—

पृथिव्याद्यात्मपर्यन्तप्रपञ्चो ह्यष्टधा स्थितः।
तनुरीशस्य चात्मायं सर्वतत्त्वनियामकः ॥ 10–51 इति।
शरीरभूतादेतस्मात् प्रपञ्चात्परमेष्ठिनः।
आत्मभूतस्य देवस्य नाभेदो न पृथक्स्थितिः ॥ 10–52

एवं चायं शरीरशरीरिभावः व्यक्तावस्थायामेव। वास्तविकदृष्ट्या तु भक्तादिशरणपर्यंतं भेदः, ऐक्यदशायां अभेद इति कालभेदेन उभयोः

विरोधपरिहारः। एवं च जीवब्रह्मणोर्भेदाभेदाङ्गीकारात् उभयश्रुत्योरपि स्वरसत एव निर्वाहः। शाङ्करमते भेदवाक्यानां द्वैतमते अभेदवाक्यानां च पीडा अवर्जनीया। रामानुजमते विशिष्टविवक्षयापि निर्वाहः एतन्मतापेक्षया क्लिष्ट एव॥

3. तथा—आत्मन आकाशः संभूतः (तै आ.1) इत्यादिवाक्यानि ब्रह्मातिरिक्तप्रपञ्चसद्भावपराणि दृश्यन्ते। 'नेह नानास्ति किंचन' (बृ.6-4-9) 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति।' इति भेदनिषेधपराणि कानिचिदुपलभ्यन्ते। अत्र ब्रह्मातिरिक्तः प्रपञ्चः अस्ति न वा इति संदेहः॥

अद्वैतिनस्तु—ब्रह्मातिरिक्तं प्रपञ्चं नाभ्युपगच्छन्ति। तेन तद्बोधकवाक्यानि न स्वार्थे प्रमाणानीति सिद्धम्॥

द्वैतिनस्तु—प्रपञ्चः ब्रह्मातिरिक्त एव। अथापि ब्रह्माधीनत्वात् जगतः ब्रह्मणा सहैक्यव्यपदेशः औपचारिकः कुत्रचित् इति वदन्ति॥

विशिष्टाद्वैतिनस्तु—जगतो ब्रह्मव्यतिरिक्तत्वेऽपि ब्रह्माविनाभूतत्वेन '*नेह नानास्ति*' इत्यादिवाक्यैः ब्रह्माविनाभूतस्य जगत एव निषेध इति वदन्ति॥

शक्तिविशिष्टाद्वैतमते तु प्रपञ्चस्य ब्रह्मणश्च उपादानोपादेयभावस्य समर्थितत्वेन उपादानोपादेययोः भेदाभेदस्य समर्थनेन च प्रपञ्चब्रह्मणोः भेदाभेदस्य सत्त्वात् उभयविधश्रुत्योरपि निर्वाहः। जीवविषय इव अत्रापि मतत्रयनिर्वाहादपि स्वारस्यं स्पष्टमेव॥

4. एवं— '*यः सर्वज्ञः स सर्ववित्*' (मु.1 1-9), '*सत्यकामः सत्यसङ्कल्पः*' (छा. 8-1-5), 'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' (श्वे.6-8) इत्यादीनि वाक्यानि ब्रह्मणः सगुणत्वबोधकानि।' निष्कलं शान्तं' (श्वे. 6-19), 'केवलो निर्गुणश्च' इत्यादीनि ब्रह्मणः निर्गुणत्वबोधकानि। *अत्र ब्रह्म निर्गुणं उत सगुणं इति विवाद उदेति॥*

अद्वैतमते निर्गुणश्रुतीनामेव प्रामाण्यं, सगुणश्रुतयस्तु कल्पितार्थाः ॥

द्वैतविशिष्टाद्वैतयोस्तु सगुणश्रुतीनां यथावस्थितार्थकत्वमेव, निर्गुणश्रुतेस्तु हेयगुणनिषेधपरत्वेन तस्या अपि प्रामाण्योपपत्तिः ॥

सिद्धान्ते तु सगुणनिर्गुणवाक्यानां विशिष्टाद्वैतमतरीत्यापि विरोधपरिहारः भाष्ये कुत्रचित् प्रतिपादितः। एवं कारणावस्थाविषयिणी निर्गुणश्रुतिः, कार्यावस्थाविषयिणी सगुणश्रुतिः। ब्रह्मनिष्ठा शक्तिः प्रलयदशायां ब्रह्मणि विलीना सृष्टिदशायामेव ज्ञानेच्छाद्याकारं भजते इति पूर्वमेवोक्तम्। एवं च निर्विकल्पं निराकारं कूटस्थं समुद्रस्थानापन्नं यद्ब्रह्म तत् केवलं सच्चिदानन्दरूपेणावतिष्ठत इति सिद्धान्तशिखामण्युक्त्या, तदा शक्तेः सङ्कुचिततया ज्ञानेच्छाक्रियादीनां तस्मिन् विलयेन ब्रह्म निर्गुणं इत्युच्यते। तस्या एव शक्तेः विकासवेलायां परब्रह्म सगुणं इत्युच्यते। तदेवमुक्तं श्रीकरभाष्ये— P. 136

> शक्तेः सङ्कोचभावेन संप्टेः पूर्वं महेश्वरः ।
> निरंशो निर्गुणश्चेति वेदान्तेषु प्रगीयते ॥
> शक्तेर्विकासभावेन ह्यनन्तगुणवानिति ।
> प्रोच्यते भगवान् रुद्रः पशुपाशविमोचकः ॥ इति

शाङ्करमते सगुणश्रुतीनां बाध एव। द्वैतमते गुणाङ्गीकारेऽपि गुणानां ब्रह्मस्वरूपानतिरेकात् अन्ततः शाङ्करमतात् नात्यन्तवैलक्षण्यमिति मतद्वयेऽप्यस्वारस्यमवर्जनीयम्।

5. तथा— 'सत्यं ज्ञानं' (तै.आ.1), 'विज्ञानमानन्दं ब्रह्म' (बृ.5-9-28) इत्यादीनि ब्रह्मणः ज्ञानानन्दस्वरूपत्वबोधकानि वाक्यानि। 'तदैक्षत' (छा. 6-2-3), 'सोऽकामयत' (तै. आ. 6), 'आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन' (तै.आ. 9) इत्यादीनि ब्रह्मणः ज्ञानानन्दगुणकत्वबोधकानि। अतः ब्रह्म ज्ञानस्वरूपम् उत ज्ञानगुणकम् इति विवादः अपरः॥

अद्वैतमते ब्रह्मणो निर्गुणत्वेन सर्वज्ञत्वादिप्रतिपादकानां वाक्यानां न स्वार्थे प्रामाण्यम्॥

द्वैतविशिष्टाद्वैतयोस्तु ब्रह्म स्वरूपतो ज्ञानस्वरूपं ज्ञानगुणकं च ॥

शक्तिविशिष्टाद्वैतमते तु ब्रह्मशक्तेः चैतन्यात्मकत्वेन तस्या एव ज्ञानेच्छाद्याकारेण परिणत्या, ब्रह्म ज्ञानस्वरूपं सदेव ज्ञानात्मशक्तियुतमपि भवति इति विशिष्टाद्वैतमतवदेव निर्वाहः। सगुणवाक्यनिर्वाहवदेव अत्रापि अद्वैतद्वैतमतयोः अस्वारस्यमवर्जनीयमेव ॥

6. तथा—'विज्ञानात्मा पुरुषः' (प्रश्न. 4-9), 'विज्ञानघन एव' (बृ. 4-4-12) इत्यादीनि जीवस्य ज्ञानस्वरूपत्वबोधकानि। 'जानात्येवायं' (प्रश्न.4-9) 'एष हि द्रष्टा श्रोता' इत्यादीनि जीवस्य ज्ञानाश्रयत्वबोधकानि। अतः किं जीवः ज्ञानस्वरूपः ज्ञानाश्रयो वा? इति जीवविषयिणी चर्चा ॥

अद्वैतमते जीवः कल्पित एव। तस्य ज्ञानं नाम अन्तःकरणवृत्तिरेव। तथा च जीवो न ज्ञानाश्रयः ॥

द्वैतमतेऽपि एवमेव, परन्तु जीवो न कल्पित इति विशेषः ॥

विशिष्टाद्वैतमते तु जीवोऽपि ब्रह्मवदेव ज्ञानस्वरूपः ज्ञानाश्रयश्च ॥

सिद्धान्ते तु परमशिवस्यैव जीवभावापत्त्या तन्निष्ठा चिच्छक्तिरेव सङ्कुचिता सती जीवे ज्ञानाद्याकारं भजत इति ज्ञानस्वरूपोऽपि जीवः ज्ञानात्मकसंकुचितशक्तिविशिष्टो भवति। अत्रापि उक्तकल्पवदेव आद्यमतद्वये अस्वारस्यं स्पष्टम् ॥

7. एवं—'निरवद्यं निरञ्जनं' (श्वे. 6-19), 'सत्यं ज्ञानं' (तै.आ.1) इत्यादीनि ब्रह्मणः निर्विकारत्वबोधकानि। 'तदात्मानं स्वयमकुरुत' (तै.आ.6), 'बहु स्यां प्रजायेय' इत्यादीनि परिणामरूपविकारबोधकानि। अतः ब्रह्म परिणामि न वा? इति ब्रह्मण उपादानत्वविषये चर्चा ॥

अद्वैतमते ब्रह्म निर्विकारं, अत एव जगतः न परिणाम्युपादानम्, किन्तु विवर्तोपादानम् ॥

द्वैतमते ब्रह्मण उपादानत्वमेव नास्ति। तस्य कारणत्वपरवाक्यान्यपि निमित्तकारणत्व एव विश्राम्यन्ति॥

विशिष्टाद्वैतमते तु ब्रह्म स्वरूपतो निर्विकारमपि तच्छरीरभूतचिदचितोः विकारसंभवात् तद्द्वारा ब्रह्म जगदुपादानमपि भवति॥

सिद्धान्ते तु ब्रह्मणः शक्तिवैशिष्ट्यवशात् प्रपञ्चाकारेण परिणामः पूर्वं उपपादितः। एतादृशपरिणामस्य दोषावहत्वं च न संभवतीति प्रतिपादितम्। किं च एकदेशांशतः जगदाकारेण परिणामेऽपि अवशिष्टाधिकांशतः समुद्रस्थानापन्नं ब्रह्म निर्विकारं निराकारमेव च अवतिष्ठत इति च विस्तरेणोपपादितम्। एवं च निर्विकारत्वादिश्रुतयः तादृशकूटस्थनिराकारब्रह्मपराः। स्वशक्त्येकांशेन जगदाकारेण परिणामात् ब्रह्म परिणामिकारणभूतोपादानमपि भवतीति उभयश्रुत्योः स्वरसतो निर्वाहः। केचित्तु ब्रह्माविनाभूतायाः शक्तेरेव जगदात्मना परिणामः, ब्रह्म तु स्वतो निर्विकारमेव इति निर्वहन्ति। अयं पक्षः ब्रह्मस्वरूपनिरूपण एव सूचितः। एतत्पक्षे च ब्रह्मणो निर्विकारत्वसमर्थनेऽपि परिणामित्वाभावेन शक्तेरेव साक्षादुपादानत्वम्। ब्रह्मणस्तु तद्विशिष्टत्वात् उपादानत्वोक्तिरिति विशिष्टाद्वैतमतवदेव किञ्चित्क्लेशेन उपादानत्वं निर्वाह्यम्।

अद्वैतमते तु उपादानत्वप्रतिपादकश्रुतीनां अस्वारस्यं दुरपह्नवम्। लोकेऽध्यासस्थले शुक्तिरजतादौ रजतं प्रति शुक्तिरुपादानमिति केनापि अव्यवहारात् विवर्तोपादानत्वं ब्रह्मण इति परिभाषामात्रम्। द्वैतमते तु ब्रह्मण उपादानत्वमेव नास्ति इति तादृशश्रुतीनां सर्वथा बाध एव॥

8. एवं—'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते' (छा. 1-6-6) इत्यादीनि ब्रह्मणः आकारबोधकानि कानिचित्। यत्तदद्रेश्यं अग्राह्यं(मु-1-1-6) 'अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः (श्वे.3-19) इत्यादीनि ब्रह्मणः निराकारत्वबोधकानि। अतः ब्रह्म विग्रहविशिष्टं विग्रहरहितं वा? इति ब्रह्मणः आकारविषये विवादः॥

अद्वैतमते—ब्रह्म निराकारमेव। आकारस्तु केवलं कल्पितः॥

द्वैतमते ब्रह्म साकारमेव। परन्तु आकारस्यापि चैतन्यात्मकत्वेन स्वरूपरूपत्वे पर्यवसानात् निराकारत्वपि प्रकारान्तरेणास्ति॥

विशिष्टाद्वैतमते—ब्रह्म स्वरूपतो निराकारमपि स्वेच्छया भक्तानुग्रहलीलायां गृह्णात्येव॥

एतत्सिद्धान्तेऽपि मूर्तामूर्तोभयरूपं ब्रह्म उपासकानुग्रहाय दिव्यं आकारं परिगृह्णाति इति उपपादनेन विग्रहवत्त्वबोधकश्रुतयः मूर्तब्रह्मपराः। विग्रहराहित्यबोधकास्तु अमूर्तब्रह्मपराः इति अनायासत एव निर्वाहः। अस्मिन् दर्शने साकारनिराकारोभयरूपेण स्थितः परमात्मा एक एव प्रभुः महेश्वरः परमशिव इति व्यपदिश्यते। अद्वैतदर्शने तु मायाप्रतिफलितस्यैव ईश्वरत्वं कल्प्यते। अयमभिप्रायो दासगुप्तमहाशयेन स्पष्टं अभिधीयते॥

"In Sankara's system, Iśwara is only a superillusion formed by the reflection of Brahman through Māyā. We have already notified that Srīpati regards this view as entirely erroneous. With him, Iśwara or Māheśwara means the Supreme God". (H.I Ih.Vol.V p.180–181.)

ब्रह्मणो विग्रहस्य अद्वैतवादेऽनङ्गीकारात् तादृक्श्रुतेः कल्पितविग्रहविषयत्वमेव। द्वैतमते विग्रहाङ्गीकारेऽपि तस्य ब्रह्मस्वरूपानतिरिक्तत्वात् अर्थतोऽद्वैतपक्षान्न विशेषः। अतश्चैतन्मतद्वयेऽपि एतद्विषये अस्वारस्यं स्फुटमेव॥

9. 'यद्वाचानभ्युदितं' (केन. 1–4), 'यतो वाचो निवर्तन्ते' (तै. आ. 9) इत्यादीनि ब्रह्मणः शब्दाद्यगोचरत्वपराणि कानिचिद्वाक्यानि। 'उपासीत मन्वीत' 'श्रोतव्यो मन्तव्यो' (बृ.) इत्याद्युपदेशात् शब्दादिगोचरत्वपराणि कानिचित्। अतः ब्रह्म शब्दादिगोचरं नवा इति संशयः॥

अद्वैतमते—ब्रह्म सर्वथा शब्दागोचरमेव। श्रुत्यादयस्तु उपहितब्रह्मबोधका एव, न शुद्धब्रह्मबोधकाः॥

द्वैतविशिष्टाद्वैतयोः ब्रह्मणः स्वरूपतो गुणतश्चापरिच्छिन्नत्वेन इदमित्थमिति निष्कृष्य शब्देन बोधयितुमशक्यमिति 'यतो वाचः' इत्यादि वाक्यं प्रवृत्तमिति निर्वाहः ॥

एतन्मतेऽपि ब्रह्मणः शब्दवेद्यत्वावेद्यत्वादिकमपि विशिष्टाद्वैतवदेव। सिद्धान्तशिखामणौ 'परिच्छेदकथाशून्यम्' (2-4) इति ब्रह्मणः परिच्छेदकशब्दागोचरत्वमेवोक्तम् न सर्वथा शब्दागोचरत्वमिति। अस्मिन् विषये अद्वैतमते तद्वत् ब्रह्मणो वाच्यत्ववेद्यत्वप्रतिपादकश्रुतीनां बाध एव। ब्रह्मणः सर्वथा अनिर्वचनीयत्वं खलु तैरुच्यते ॥

10. एवं 'तमेवं विद्वानमृत इह भवति नान्यः पन्था विद्यतेऽयनाय' (पु.सू.), इत्यादीनि वाक्यानि ज्ञानातिरिक्तस्य मोक्षसाधनत्वनिषेधकानि। 'विद्यांचाविद्यां च यस्तद्वेदोभयं सः' (ईश. 11) इत्यादीनि कर्मणोऽपि मोक्षसाधनत्वप्रतिपादनपराणि वाक्यानि। अतः किं केवलात् ज्ञानान्मोक्षः उत कर्मज्ञानाभ्यां इति विवादः ॥

अद्वैतमते ज्ञानादेव मोक्षः। कर्माणि तु केवलं चित्तशुद्ध्यर्थानि ॥

द्वैतमते—ज्ञानोत्पत्तिपर्यन्तमनुष्ठितानि कर्माणि चित्तशुद्ध्यर्थानि। अनन्तरमनुष्ठितानि तु मुक्तावानन्दोत्कर्षफलानि ॥

विशिष्टाद्वैतमते तु कर्मसमुच्चितं ज्ञानमेव मुक्तिहेतुः। परंतु कर्मणामङ्गत्वेनाप्रधानत्वात् 'नान्यः पन्थाः' इत्यादि व्यपदेशः ॥

सिद्धान्ते कर्मज्ञानाभ्यामेव मोक्षः। भक्तिरपि ज्ञानविशेषरूपैव इति अनुपद एव अभिधानेन उभयमपि मोक्षसाधनम्। उभयोर्मोक्षसाधनत्वे "नान्यः पन्थाः" इत्यादि श्रुतिविरोधश्च मुक्त्युपायनिरूपणावसर एव परिहृतः। अत्रापि विषये अद्वैतद्वैतमतयोः ज्ञानादेकस्मादेव मोक्षाङ्गीकारात् "विद्यांचाविद्यांचे" त्यादिश्रुतेर्निर्वाहः एतन्मतवन्न स्वरसः इति व्यक्तमेव। द्वैतिनोऽपि हि भक्तेरपरोक्षज्ञानद्वारैव मोक्षसाधनत्वमभ्युपगच्छन्ति न साक्षात् ॥

11. 'ब्रह्मविदाप्नोति परम्' (तै.आ.1) इत्यादीनि ज्ञानान्मोक्षप्रतिपादनपराणि। 'आत्मेत्येवोपासीत' (बृ.3-4-7) इत्यादीनि उपासनायाः मोक्षसाधनत्वपराणि। 'भिद्यते हृदयग्रन्थिः' (मुं 2-2-9) इत्यादीनि दर्शनस्य मोक्षसाधनत्वपराणि। 'स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः' (छा.7-26-2) इत्यादीनि स्मृतेर्मोक्षसाधनत्वपराणि। अतः किं मोक्षसाधनमिति सन्देहः।

अद्वैतद्वैतमतयोः अपरोक्षज्ञानमेव मुक्तिसाधनम्। विशिष्टाद्वैतमते तु अपरोक्षत्वाकारापन्नं उपासनं भक्तिपदवाच्यमेव मुक्तिहेतुः॥

एतन्मतेऽपि मोक्षसाधनभूतं ज्ञानं च भक्तिरित्यत्र विशिष्टाद्वैतमतवदेव निर्वाहः। परंतु एतत्सिद्धान्ते मुक्तौ ऐक्याङ्गीकारेण भक्तिपर्वसु विशिष्टाद्वैतमतापेक्षया वैलक्षण्यमस्ति। तत्तु संप्रदायविभागे विचार्यते। अद्वैतद्वैतमतयोस्तु ज्ञानस्यैवाव्यवहितमोक्षसाधनत्वाङ्गीकारेण उपासनादीनां मोक्षसाधनत्वपरश्रुत्यस्वारस्यं स्पष्टम्। सिद्धान्ते तु भक्तेरपि ज्ञानरूपत्वेन ज्ञानोपासनभक्त्यादीनां मोक्षसाधनत्वपरप्रमाणानां स्वरसतः समन्वयः॥

12. 'ब्रह्मविदाप्नोति परम्' (मु 3-2-8) 'परात्परं पुरुषमुपैति' (छा. 4-3-4) 'परंज्योतिरुपसंपद्य' इत्यादीनि जीवस्य प्राप्तृत्वं परमात्मनः प्राप्यत्वं च बोधयन्ति। एवं मुक्तिकालेऽपि भेदप्रतिपादकानि कानिचित् वाक्यानि। अतः किं मुक्तिकालेऽपि भेदः? अभेदः? साम्यं वा? इति विवादः॥

अद्वैतमते ब्रह्मभावापत्तिरेव मुक्तिः, द्वैतविशिष्टाद्वैतमतयोस्तु साम्यमेव मुक्तिः॥

सिद्धान्ते मुक्तस्वरूपं पूर्वमेव विचारितम्। ऐक्यमेव परा मुक्तिरिति 'ब्रह्म वेद ब्रह्मैव भवति' इत्यादिना स्वरसत एव निरूढम्। यत्र तु भेदः प्रतीयते 'स तत्र पर्येति जक्षन् क्रीडन्' इत्यादौ, तत्र सालोक्यादिरूपा अपरमुक्तिरेव विवक्षिता इति श्रुतिद्वयसामरस्यम्। मुक्तिविषये द्वैतविशिष्टाद्वैतमतयोः मुक्तौ अभेदपरवाक्यानां अस्वारस्यमेव। अद्वैतमतवदेतत्सिद्धान्ते निर्वाहेऽपि, अद्वैतमते अपरमुक्तेर्मिथ्यात्वेन 'स तत्र पर्येति' इत्यादि वाक्यानां कल्पितार्थविषयत्वप्रयुक्तं अस्वारस्यमस्त्येव॥

13. 'अत्र ब्रह्म समश्नुते,' (कठ.2-6-14) 'अमृत इह भवति' (पु.सू.) इत्यादीनि अत्रैव मुक्तिप्रतिपादनपराणि। 'शतंचैका च हृदयस्य नाड्यः तासां मूर्धानं अभिनिस्सृतैका। तयोर्ध्वमायान् अमृतत्वमेति।' (छा.8-3-4) 'अस्माच्छरीरात्समुत्थाय परंज्योतिरुपसंपद्य स्वेन रूपेण अभिनिष्पद्यते।' 'तत्पुरुषो मानवः स एनान् ब्रह्म गमयति' (छा. 4-15-5) 'आदित्यवर्णं तमसः परस्तात्' (पु.सू) इत्यादीनि देशविशेषे मुक्तिप्रतिपादकानि कानिचित्। अतः किमत्रैव मुक्तिः उत देशविशेषे? इति विवादः॥

अद्वैतमतेऽत्रैव मुक्तिः। द्वैतमते-यथेच्छं उभयथापि। विशिष्टाद्वैतमते देशविशेष एव। अत्रैव मुक्तिवचनं उपासनकालिकभगवदनुभवपरम्॥

सिद्धान्ते तु 'अत्र ब्रह्म समश्नुते' इत्यादिकं परमुक्तिविषयम्। उत्क्रान्तिगत्यादिकं तु अपरमुक्तिविषयम् इत्यपि मुक्तिस्वरूपनिर्णयावसरे कथितम्। अस्मिन्नपि विषये परमतेष्वस्वारस्यं अपरिहार्यम्।

14. 'स तत्र पर्येति जक्षन् क्रीडन् रममाणः' (छा.8-12-3) इत्यादीनि मुक्तस्य विहारादिप्रतिपादकानि। 'सत्यारम प्राणारामं' इत्यादीनि आत्मारामत्वेन विहारनिषेधकानि। अतो मुक्तानां विहारः तदनुगुणशरीरं च अस्ति न वा इति विवादः॥

विहारादिकं अपरमुक्तावेवेत्यद्वैतिनः॥ द्वैतविशिष्टाद्वैतयोस्तु विहारस्तदभावश्च तत्तदिच्छानुगुण इत्युभयमप्यस्ति मुक्तौ॥

सिद्धान्ते तु अपरमुक्तौ विहारः। अतः अपरमुक्तौ कल्याणविभूत्यात्मके सालोक्यसारूप्यसामीप्यरूपे तदनुगुणदिव्यशरीरादिसद्भावः। सायुज्यरूपे कैवल्यविभूत्यात्मके परमुक्तौ शरीराभावः इति तादृशश्रुतीनां सामरस्यम्। अत्रापि इतरमतेषु अस्वरस्यमस्त्येव॥

15. 'सः स्वराड् भवति' (छा.7-25-2) इत्यादीनि मुक्तस्य स्वातन्त्र्यबोधकानि कानिचिद्वाक्यानि। 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विप-

श्रिता" इत्यादीनि ब्रह्मणा सहैव मुक्तस्य भोगप्रतिपादकानि कानिचित्। अतः किं मुक्तः स्वतन्त्रः उत अस्वतन्त्रः इति विचारः॥

मुक्तः सर्वथा स्वतन्त्र इत्यद्वैतिनः। परतन्त्र एवेति द्वैतिविशिष्टाद्वैतिनौ॥

सिद्धान्ते तु ब्रह्मणा सह भोगानुभवादिः अपरमुक्तौ। परमुक्तौ ब्रह्मणा ऐक्यात् ब्रह्मवत् स्वातन्त्र्यमेवेति न विरोधः। द्वैतविशिष्टाद्वैतमतयोस्तु मुक्तौ स्वातन्त्र्यप्रतिपादकवाक्यानां अस्वारस्यं स्पष्टमेव।

अत्रेदमवधेयम्। ब्रह्मापि परापरमूर्तामूर्तादिभेदेन द्विविधम्। मुक्तिरपि परापरभेदेन द्विविध इति अद्वैतिभिरुच्यते। तर्हि विशेषोऽस्ति न वा इति चेत् अस्ति महान् विशेषः। अद्वैतमते अपरं ब्रह्म, अपरमुक्तिश्च मिथ्याभूता। सिद्धान्ते तु सत्यैव। एवं अद्वैतमते अपरसगुणब्रह्मोपासनया अपरमुक्तिः। परब्रह्मज्ञानेन च परमुक्तिरिति अङ्गीक्रियते। सिद्धान्ते तु भक्तेरेव मोक्षसाधनत्वेन निर्गुणे भक्त्युत्पत्तिविवृद्ध्यादेरसंभवेन सगुणोपासनरूपा भक्तिरेव शिवोऽहंभावविशिष्टा सती परमुक्तिहेतुः। सैव सालोक्यादिकामनाविशिष्टा सती अपरमुक्तिहेतुर्भवति। अतः एकैव भक्तिः साधकपुरुषानुरोधेन परापरमुक्तिहेतुरिति केवलनिर्गुणोपासनं नास्त्येव, निर्गुणस्य वस्तुन एव अभावात्। निर्गुणश्रुतिश्च शक्तिसंकोचकालाभिप्रायेणेति पूर्वमेवोक्तम्। अतः केवलनिराकारनिर्विशेषब्रह्मप्रतिपादकाद्वैतमततौल्यं अत्र नाशङ्कनीयम्।

एवं ब्रह्मणः स्वतो विशुद्धस्यापि स्वचिन्त्याऽघटितघटनासमर्थशक्तिविशेषवशात् जगदाकारेण परिणामस्य पूर्वं विस्तरशः उपपादनात् एकविज्ञानेन सर्वविज्ञानं मृद्घटदृष्टान्तश्च अस्मिन् मतेऽत्यन्तं स्वरसः।

अद्वैतमते ब्रह्मव्यतिरिक्तस्य कस्याप्यभावात् सर्वविज्ञानं वाङ्मात्रम्। एवं मृद्घटदृष्टान्तासङ्गतिश्च। नहि मृद्घटयोर्विवर्तोपादानत्वं तन्मतेऽपीष्टम्। दृष्टान्ते परिणाम्युपादानत्वं दार्ष्टान्तिके तु विवर्तोपादानत्वं सर्वथा न सङ्गच्छते। अतः स्पष्टमस्वारस्यं अद्वैतमते॥

द्वैतमते तु एकविज्ञानेन सर्वविज्ञानं नैव न [illegible] प्रत्येव निषिद्धम्। श्रुत्यर्थस्यानुसरणं नास्त्येव।

विशिष्टाद्वैतमतेऽपि ब्रह्मणः स्वविशेषणभूतचिदचिद्विशिष्टत्वेन उपादान-कारणत्वात् [illegible] परिणामवादित्वात् एकविज्ञानेन सर्वविज्ञानं स्वरसतो न संभवति किंतु विशिष्टैक्येनैव। श्रुत्यर्थे नास्वारस्यमस्त्येव। अतः [illegible] मते एकविज्ञानेन सर्वविज्ञानं स्वरसत अन्वेति।

एवं चास्मिन्नेव सिद्धान्ते इतरसिद्धान्तापेक्षया सर्वश्रुतीनां समन्वयः संभवतीति सम्यगुक्तं श्रीकरभाष्ये श्रीपतिपण्डितैः।

द्वैताद्वैतमते शुद्धे विशिष्टाद्वैतसंज्ञके।
वीरशैवैकसिद्धान्ते सर्वश्रुतिसमन्वयः॥ इति

—

## द्वादशोऽध्यायः

### शक्तिविशिष्टाद्वैतदर्शनस्य चारित्रिकेतिहासः

एतावता ग्रन्थसन्दर्भेण ब्रह्मसूत्रप्रस्थानगतानां दर्शनानां एतद्दर्शनस्य च साम्यवैषम्ये स्वरस्यास्वरस्ये च परिशीलिते। अथ आगममूलतया प्रवृत्तानां शैवमतानां अस्य च साम्यवैषम्यादिकं विचार्यते। एतद्विचारावसरे अस्य दर्शनस्य चारित्रिकेतिहासोऽपि स्वत एवोपलभ्यते।

शैवमते नकुलीशपाशुपतकाश्मीरशैवादिभेदेन बहवो विभागा दृश्यन्ते। दर्शनतत्त्वविषये च यादृशाः परस्परविलक्षणाः सिद्धान्ता वर्तन्ते ते सर्वेऽपि शैवदर्शनेषु वर्तन्ते। भेदवादः, अभेदवादः, भेदाभेदवादः, विशिष्टाद्वैतवादश्चेति वादचतुष्टयमपि शैवदर्शने वर्तन्ते। तत्र नकुलीशदर्शने जीवकर्मनिरपेक्ष-मेव भगवान् स्वस्वातन्त्र्येणैव विषममिदं जगत् सृजति। मुक्तावपि जीवेश्वर-योर्भेद एव। साम्यापत्तिरेव मुक्तिः इत्येवमादिकं सर्वदर्शनसंग्रहे निरूपितम्।

पाशुपतदर्शनं तु भेदाभेदवादिमतम्। पशु–पति–पाशभेदेन तत्त्वमेव त्रिविधमित्यङ्गीकृतम। सिद्धान्ते तु शक्तिविशिष्टः शिव एक एव तत्त्वम्। एवं पाशुमतमते मुक्तौ भेदाभेद एव, नत्वभेदः। शैवपरिभाषायां अन्ते मुक्ति-प्रकरणे ईषद्भेदगर्भोऽभेद एवैक्यमिति स्पष्टमुक्तम्। एवं तत्त्वप्रकाशेऽपि 'मुक्तात्मानोऽपि शिवाः किंत्वेते तत्प्रसादतो मुक्ताः। सोऽनादिमुक्त एकः' इति भेदाभेद एव उक्तः नत्वभेदः। श्रीकण्ठाचार्यास्तु विशिष्टाद्वैतिन इति पूर्वमेव विस्तरश उक्तम्। मुक्तौ जीवब्रह्मणोरभेदवादस्तु सिद्धान्तसम्मतः। विवर्तवादः परं शैवमते न केनाप्यङ्गीक्रियत इतीदं विस्मयस्थानमेव॥

कश्मीरशैवमपि मुक्तौ अभेदमेवाङ्गीकरोति। प्रायः तत्त्वस्वरूपनिरू-पणादिविषयेऽपि साम्यं वर्तत एव। परंतु तन्मते शक्तिः परमात्मनोऽभिन्नेत्यङ्गी क्रियत इति न स्वरसतः प्रतीयते। शक्तिशक्तिमतोः विविच्य व्यवहारो न दृश्यते, कुत्रचित् शिवापेक्षया शक्तेरेव प्राधान्यमप्युपपाद्यते। शाक्तमतच्छाया प्रायः तन्मते पतिता स्यात्। एतत्सिद्धान्ते तु शक्तिः परमात्मप्राणभूतैव। एतद्विशेषस्फोरणायैव अस्य दर्शनस्य शक्तिविशिष्टाद्वैतमिति संज्ञा अङ्गीकृता। सामान्यतः शैवदर्शने दक्षिणात्यशैवदर्शनं, काश्मीरशैवदर्शनं चेति द्वैविध्यमेव स्थूलतः प्रतीयते। इतराणि च शैवदर्शनानि एतदन्यतरज्ञानानुसारिण्येव दृश्यन्ते। तत्र दक्षिणात्यशैवं प्रायः पाशुमतमित्युच्यते। काश्मीरशैवं तु प्रत्यभिज्ञादर्शनमित्युच्यते। अहं शिव एवास्मि इति प्रत्यभिज्ञैव शिवैक्या-पत्तिरूपा मोक्षहेतुः इत्यङ्गीकारात् प्रत्यभिज्ञानमिति तस्य व्यवहारः॥

तत्त्वनिरूपणप्रक्रियायां काश्मीरशैवस्य अस्य च नात्यन्तं भेद इत्यु-क्तम्। साधनमार्गविषये तु एतन्मतं दाक्षिणात्यशैवमतसिद्धं भक्तिमार्गमेव अवलम्बते। भक्तेः पर्वक्रमादौ परं भेदः स्यात् कामम्। एवं दाक्षिणात्य-शैवात् भक्तिं स्वीकृत्य प्रवृत्तमपि इदं मतं काश्मीरशैवात् शिवोऽहंभावनामपि स्वीकृत्य भक्तौ समयोजयदिति भाति। काश्मीरशैवे प्रत्यभिज्ञाशब्देन या

भावना उच्यते सैव एतन्मते भावशब्देन कथ्यते । कर्मभावज्ञानानां खलु मोक्षसाधनत्वं पूर्वं विचारितम् । एवं भारतदेशस्य मध्यप्रदेशे प्रवृत्तमिदं दर्शनं औत्तरात् काश्मीरशैवात्, दाक्षिणात्यात् पाशुपताच्च सारांशान् संगृह्य प्रवृद्धमिति ज्ञायते । अयं च विषयः दासगुप्तमहाशयेनापि सूचितः ॥

शैवदर्शनप्रभेदपरिशीलनावसरे नवकल्याणमठ श्री कुमारस्वामिन वीरशैवदर्शनस्य वैलक्षण्यमेवं वर्णयन्ति ।

"All the three Śaiva schools recognise only three entities प्रकृति, पुरुष and परब्रह्म. The will of Parabrahman has not been brought to the forefront in those schools, though all have implicit faith in it. It is in the Śāktāgamas that we find the will playing an important role, but there, the शक्ति gets the upper hand of शिव who lies inert. Vira-Śaivism maintains a perfect balance between Truth and and Will by saying that शक्ति is the personality of शिव, that the will or Parāprakṛti is the very soul of Parabrahma. Hence, Vīrśaivism acknowledges four entities, प्रकृति, पुरुष, पराप्रकृति and परब्रह्म". V.Ph.M.P 60

एवं च शैवदर्शनेभ्यः उत्तमांशान् स्वीकृत्य प्ररोहन्नपि वीरशैवधर्मः प्राचीन एव काले शिवशक्तिसामरस्याख्यं शक्तिविशिष्टाद्वैतदर्शनस्वरूपं अध्यगच्छदिति ज्ञायते । शैवदर्शनेभ्यो वीरशैवदर्शनस्य ऐतिहासिकीं प्रगतिं एवं निर्दिशन्ति नवकल्याणमठ श्रीकुमारस्वामिनः ।

"Vīraśaivism historically considered is a fine and fullblown flower of Śāivism The inscriptions of Mohenja Daro and Harappa have revealed the astounding truth that the cult of Siva was current as far back as 3000 B.C. To quote Sir John Morshall, "Among the many revelations that Mohenja Daro and Harappa have had store for us, none perhaps is more remarkable

than the discovery that Saivism takes its place as the most ancient living faith in the world.' Again to quote Dr. Prānānath, 'The cult of Siva and mother Goddess had already been shown to be very old. It is interesting to find them current as far book as 3000 B.C." (V.Ph. and Mys. P 117)

महाभारते आनुशासनिकपर्वणि

"किमाहुर्भरतश्रेष्ठ पात्रं विप्रास्सनातनम् ।
लिङ्गिनं ब्राह्मणं चापि ब्राह्मणं चाप्यलिङ्गिनम् ॥
सद्वृत्तिमपि विज्ञाय लिङ्गिने चेतराय च ।
देयमाहुर्महाराज उभावेतौ तपस्विनौ ॥"

इति लिङ्गधारिवीरशैवानामुल्लेखः परिदृश्यते ॥

एवं च सामान्यतः वीरशैवाख्यप्रभेदसहितं शैवदर्शनं अस्मिन् भारतवर्षे अनादेः कालादारभ्यैव वर्तते । मोहेंजदारोस्थले भूगर्भशोधनवेलायां इदानीं शैवैरर्चनीयस्थावरलिङ्गसदृशं बृहदाकारं, वीरशैवैरर्चनाय धार्यमाणेष्ट-लिङ्गसदृशं अङ्गुष्ठपरिमितं च लिङ्गं लब्धम् । तेन पञ्चसहस्रवर्षेभ्यः पूर्वमपि शैवदर्शनं तदन्तरङ्गभूतं वीरशैवमतं चासीदिति स्पष्टमवगम्यते । एवं सामान्यतः शैवदर्शने स्थितेऽपि प्राचीनकाले तस्य स्वरूपादिकं कीदृशमासीदिति इदानीं नावगन्तुं शक्यते । प्रायः सर्वाण्यपि शैवदर्शनानि आगममवलंब्यैव प्रवृत्तानि इति गम्यते । शङ्कराचार्यानन्तरं वैदिकवादस्य व्याप्तिः बहुधा अभूत् । तदात्वे सर्वेऽपि वेदोक्तं चेत् श्रद्दध्युः इति स्थिति-रासीत् । अतः आगममूलतया प्रवृत्तान्यपि शैवदर्शनानि श्रुतिमपि क्रोडीकृत्य उभयसमन्वयप्रदर्शनेन प्रवृत्तानि । ब्रह्मसूत्रेषु तर्कपादे 'पत्युरसामञ्जस्यात्' (2-2-37) इत्यधिकरणं केवलागममूलकस्य 'निमित्तकारणमात्रं ब्रह्म' इति वादस्य निरसनपरं इति श्रीकरभाष्ये, क्रियासारे, श्रीकण्ठभाष्ये च वर्ण्यते ।

एतेन ब्रह्मणो निमित्तत्वमात्रप्रतिपादके केवलशैवमते अरुचिवशात् निमित्तोपादानकारणवादः श्रुतिमूलकः प्रसृत इति प्रतिभाति ॥

यथा वा आगममूलकं शैवदर्शनं आसीत् तथा आगममूलकं वैष्णवदर्शनमप्यासीत् इत्यवगम्यते। उत्पत्त्यसंभवाधिकरणे हि शङ्कराचार्यप्रभृतिभिः पाञ्चरात्रोक्ता आगमप्रक्रिया निराक्रियते, श्रुतिविरोधश्च प्रदर्श्यते। अनन्तरकाल एव यामुनाचार्यरामानुजाचार्यप्रभृतिभिः श्रुत्यनुसारेण आगमानां अर्थं उपवर्णयद्भिः श्रुत्युक्तप्रक्रियैव आदृता। वीरशैवमते तु आगमानुसारेण श्रुत्यर्थं उपवर्ण्य आगमोक्तप्रक्रिया आदृता। तथाहि वैष्णवागमेष्वपि सालोक्यसामीप्यसारूप्यसायुज्यभेदेन मुक्तिभेदः प्रतिपाद्यते। तत्र सायुज्यं ऐक्यमेवेति अङ्गीकृतं प्रतिभाति। "उत्क्रमिष्यत एवंभावादित्यौडुलोमिः" (1-4-21) इति सूत्रस्य भास्करभाष्ये—"यदाहुः पाञ्चरात्रिकाः 'आमुक्तेरेव भेदः स्यात् मुक्तस्य च परस्य च। मुक्तस्य तु न भेदोऽस्ति भेदहेतोरभावतः ॥ इति" एतेन पाञ्चरात्रमते संसारदशायां जीवब्रह्मणोर्भेदः मुक्तिदशायां च अभेद इति एतत्सिद्धान्तवदेव अङ्गीकृतमासीत् इति स्पष्टमवगम्यते। परं तु इदं वैष्णवं मतं नष्टमेव। अनन्तरकालिकैराचार्यैः वैदिकमतव्याप्त्यन्तर्गतैः आगमापेक्षया वेदानां प्रामाण्यातिशयं अङ्गीकृत्य वेदानुरोधेन आगमानां अर्थस्य वर्णनेन तादृशभास्करभाष्योक्तः मुक्तौ जीवब्रह्मणोरभेदपक्षः लुप्त आसीदित्यवगम्यते ॥

वीरशैवैस्तु श्रुत्यपेक्षया आगमानां प्रामाण्याङ्गीकारेण श्रुतीनामेव आगमानुसारेण अर्थं वर्णयित्वा आगमोक्तः मोक्षचातुर्विध्यपक्षः, सायुज्यमुक्तौ अत्यन्ताभेदपक्षश्च तथैव संरक्षित इति विशेषः ॥

एवं आगमानुरोधेन प्रवृत्तस्यास्य वीरशैवदर्शनस्य आरंभकालस्तु कः इति स्पष्टं निर्णेतुं न शक्यते। वीरशैवमतोद्धारकत्वेन प्रवृत्तानां बसवार्याणां कालादारभ्य अस्य मतस्य प्रचाराधिक्येऽपि तत्पूर्वमपि एतन्मतानुसारिण आसन्निति अवगम्यते। बसवार्यवचनेषु दासिमार्यस्य वीरशैवस्य उल्लेखनात् बसवार्यापेक्षया

दासिमायः प्राचीन इति स्पष्टमवगम्यते। ततोऽपि प्राचीना तत्परंपरा तु नोपलभ्यते। परं तु, "यदा यदाहि धर्मस्य हानिः शैवस्य जायते।
तदा तदाऽवतारोऽयं गणेशानां महीतले॥"(वी.चं.P.332)

इति शङ्करसंहितोक्तरीत्या लोकानुग्रहार्थं धर्मोद्दिधीर्षया महात्मनामवतारः तदा तदा सञ्जायते। एवं रेणुकादयः पञ्च आचार्याः भारतस्य विविधभागेषु अवतीर्य शक्तिविशिष्टाद्वैतसिद्धान्ततत्त्वं बोधयामासुरिति उपस्थितेषु ग्रन्थेषु परिदृश्यते। एते च पञ्चाचार्याः प्रतियुगं धर्मक्षोभकाले अवतीर्य वीरशैवमतं प्रकाशयन्तीति चोच्यते। एतेषां पञ्चाचार्याणां कलियुगावतारे रेवणसिद्ध-मरुळसिद्ध-पण्डिताराध्य-एकोराम-विश्वाराध्यनाम्ना प्रसिद्धिः श्रूयते। एभिः आचार्यपञ्चकैः स्थापिताः पीठाः रम्भपुर्यां, उज्जयिन्यां, श्रीशैले, हिमवत्केदारे, वाराणस्यां च इदानीमप्युपलभ्यन्ते। श्रीनन्दीमठमहाशयाः—"क्रिस्ताशकस्य 11–12 शतके रेवणसिद्धपण्डिताराध्यैकोरामप्रमुखाः एतन्मतं प्रकाशयामासुः। एत एव पञ्चाचार्यकोटिप्रविष्टाः स्युर्वेति न निर्णेतुं शक्यते।यद्येत एव स्युः, तर्हि ऐतिहासिकदृष्ट्या एतन्मतस्य प्रचारकालः 11–12 क्रैस्तशकः स्यात्" इत्यभिप्रयन्ति। (कन्नडनाडिनचरित्रे *Page 200*)

परंतु तैरेव महाशयैः "महाभारते केषुचित् शैवेषु उक्ताः धर्माः इदानीं एतन्मते दृश्यन्ते। वीरशैवोक्ततत्त्वानि महाभारतोक्ततत्त्वान्यनुकुर्वन्ति। अत एतन्मतस्य बीजं महाभारतकाल एवासीदिति वक्तुं शक्यम्। इदानीं यादृशरूपविशिष्टं वर्तते तादृशं रूपं तदा न स्याद्वा। सर्वाण्यपि हि मतानि आरंभकाले सामान्यतः प्रवृत्तानि कालक्रमश एव पुष्टिं बलं प्रचारं व्याप्तिं च लभन्ते। तथा इदमपि मतं भवति।" इत्यादिना अस्य मतस्य प्राचीनत्वं सम्यक् उपपादितमेव॥

यद्यपि आचार्याणा अवतारकालः ऐतिहासिकदृष्ट्या विचारास्पद एव। अथापि तैरेव वीरशैवधर्मः प्रथमं लोके स्थापितः प्रचारितश्चेत्यत्र न

कोऽपि सन्देहावकाशः । श्रीनन्दीमठमहाशयैरयमंशः स्पष्टं प्रतिपादितः।
"In short, these five Arādhyas are believed to be the first preachers of Viraśaivism, ie, they are the founders of Viraśaivim according to Tradtion". (H.B. of V p. 18).

द्वादशशतके स्थितेभ्यः बसवार्येभ्यः श्रीपतिपण्डिताचार्याः प्राचीना इति-काशीनाथशास्त्रिभिः स्पष्टं सयुक्तिकं निरूपितम् श्रीपतिपण्डितकालनिर्णये। एवंच बसवार्येभ्यः प्रागपि इदं मतं लब्धप्रचारमासीदित्यवगम्यते। बसवार्यकाले परं प्रचारातिशयो विशेषतः प्राप्तः। श्रीपतिपण्डितानां कालात् प्राक् दर्शनं कीदृग्रूपं आसीदिति न निर्णेतुं शक्यते। श्रीपतिपण्डितैः प्रमाणतया अभ्युपगतः सिद्धान्तशिखामणिः षट्स्थलविद्यात्मकत्वेन वीरशैवदर्शनस्य वैशिष्ट्यं प्रतिपादयति। ततोऽपि प्राचीनस्य ग्रन्थस्य अनुपस्थित्या तत्प्रतिपादितया दिशा एतन्मतं प्रसारितं भाति ॥

क्रियासारे पूर्वं नीलकण्ठशिवाचार्यैः ब्रह्मसूत्राणां वीरशैवमतपरं भाष्यं कृतमित्युक्तम्। तच्च भाष्यं इदानीमुपलभ्यमानात् श्रीकण्ठभाष्याद्भिन्नमेव। श्रीकण्ठभाष्यं तु पाशुपतमतानुसारि, न वीरशैवमतानुसारि इति पूर्वमेव आवेदितम्। स तु नीलकण्ठाचार्यः कः, कदासीदिति नावगम्यते। परं तु शङ्कराचार्यकाले नीलकण्ठशिवाचार्यः कश्चिदासीत्, तेन च ब्रह्मसूत्राणां शैवमतपरं भाष्यं कृतमासीदिति शङ्करदिग्विजयादवगम्यते। तत्र शैवमतपरं भाष्यं इति सामान्यत उल्लेखेऽपि क्रियासारे तद्भाष्यस्य वीरशैवमतानुसारित्वस्य स्पष्टमुक्त्या तत्रत्यं शैवपदं वीरशैवपरमेवेत्यत्र न संशयः ॥

एवं च शङ्कराचार्यसमकालीनेन नीलकण्ठशिवाचार्येण वीरशैवभाष्यकरणात् शङ्कराचार्येभ्योऽपि पूर्वमेव इदं मतं प्रसृतमिति स्पष्टं अवगम्यते। एवं ग्रन्थबलान्निर्णयेऽपि ऐतिहासिकदृष्ट्या निर्णेतुं साधनं नोपलभामहे ॥

ऐतिहासिकदृष्ट्या तु एतद्दितिवृत्तं 11-12 शतकादारभ्यैव लभ्यत इति नन्दीमठमहाशयैरुक्तम्। क्रिस्तषष्ठशतकादारभ्य स्थितेषु त्रिषष्टिपुरातनपुरुषा

इति प्रसिद्धेषु महात्मसु के वा शैवमतानुयायिनः के वा वीरशैवमतानुयायिनः इति विभज्य ज्ञातुं न शक्यते। तेषु केचन लिङ्गधारिण आसन्नित्यत्र न संशयः। तेषां सामान्यशैवत्वेऽपि लिङ्गधारणरहिताः केचन प्रतिष्ठितलिङ्ग-पूजका अपि वीरशैवैः अद्यापि मान्यतमत्वेन अङ्गीकृता एव। एतेन ज्ञायते प्राचीनकाले शैववीरशैवभेदः नातिमहानासीदिति। ये तु शैवमतसंरक्षणार्थं स्वप्राणानप्यर्पयितुं सिद्धाः ते वीरशैवाः सञ्जाता इति वीरपदादवगम्यते। वीरशैवमतस्य अहिंसाप्राधान्येऽपि परोपद्रवकाले नपुंसकैर्न भवितव्यम्, यावच्छक्ति दुष्टनिग्रहः कर्तव्य इति वीरपदेन बोध्यते। इदमेवास्य वीरशैवमतमिति नामकारणहेतुः स्यात्। माकिं 11–12 दशककाले अस्य भारतस्य माहम्मद-राजभिः महाननर्थः संजात इति चरित्रतः अवगम्यते। तत्काले स्वमतसंरक्षणाय धार्मिकैः प्राणदानाग्रपि सन्नद्धैर्भाव्यमासीत्। तादृशसन्निवेशवशाद्वा शैवेषु केचन लिङ्गाङ्गिनो वीरशैवाः अभूवन् इति ऊहयितुं अवकाशोऽस्ति। प्राचीनेऽपि काले केचित् शैवाः लिङ्गधारिण आसन् इति शिलाशासनादितः अवगम्यते। परं तु सामूहिकरीत्या लिङ्गधारणं कृतमित्यत्र न प्रमाणमुपलभ्यते। पूर्वं वैयक्तिकतया स्थितमेव लिङ्गधारणं बसवार्यकाले सामूहिकधर्मत्वेन परिवर्तितं स्यादिति भाति। परंतु अस्य वीरशैवमतस्य दर्शनसरण्यधिरोहणं प्रथमतः श्रीपति-पण्डिताचार्यैरेव कृतमिति प्रतिभाति॥

एवं च शैवमतं वीरशैवमतत्वेन क्रमेण परिणतमित्यभिप्रायेऽपि अनयोर्मतयोः महत् वैलक्षण्यं परिदृश्यते। शैवमतं प्रतिष्ठितलिङ्गपूजाविधायकम्। वीरशैवमते तु तस्य प्रसक्तिर्नास्ति। षट्स्थलोपासनात्मकमिदं दर्शनं गुरुणा अनुगृहीतं स्वेष्टलिङ्गं विना नान्यत्र पूजां अनुमोदते। अयमंशः श्री नन्दी-मठमहाशयैः विशदं उपपादितः —

"'The Philosophy of the Vīraśaivas is called the Vīraśaiva Siddhānta or the Ṣaṭsthala Siddhānta and is distinguisned from the Śaiva Siddhānta Vīraśaivism disapproves image worship as strongly as possible

and maintains that the Supreme is to be worshipped in one's own Iṣṭaliṅga, the liṅga obtained from the Guru at the time of initiation, Dikṣa. It looks with disfavour even upon the worship of the Sthāvaraliṅga, the liṅga consecrated in temples To the Vīraśaivas, liṅga is not an image of Siva, but Siva himself. He resides in the disciple in the form of Chaitanya and He is extracted in the form of Liṅga by the Guru, through his spiritual power and given into the disciple's hands for worship It is described as a great mass of light on the palm, shining before the eye, mind and bhāva. It must, on no account, be separated from the body, since its separation is equivalent to a spiritual death. Siva is not to be worshipped in any other form but that of the liṅga obtained from the Guru. The worship offered to Siva in any other form is condemned." (H.B V P 36)

एतादृश्याः लिङ्गनिष्ठायाः यावज्जीवानुष्ठानं वीरव्रतं सञ्जातम् । असिधाराव्रतमिव गहनमिदं व्रतं बहोः कालादारभ्य अनायासेन आचर्यते । वीरशैवीयषट्स्थलज्ञानस्य श्रेष्ठत्वमुपपाद्यते शङ्करसंहितायाम् —

> क्रिमिकीटपतङ्गेभ्यः पशवः प्रज्ञयाधिकाः ।
> पशुभ्योऽपि नराः श्रेष्ठाः तेषु श्रेष्ठा द्विजातयः ॥
> द्विजातिष्वधिका विप्रा विप्रेषु क्रतुबुद्धयः ।
> क्रतुबुद्धिषु कर्तारः तेभ्यः सन्यासिनोऽधिकाः ॥
> तेषु विज्ञानिनः श्रेष्ठाः तेषु शङ्करपूजकाः ।
> तेषु श्रेष्ठा महाभागाः मम लिङ्गाङ्गसङ्गिनः ॥
> लिङ्गाङ्गसङ्गिष्वधिकः षट्स्थलज्ञानवान् भवेत् ।
> तस्मादप्यधिको नास्ति त्रिषु लोकेषु सर्वदा ॥
> स वन्द्यः सर्वदा पूज्यः संसारविजिगीषुभिः ।
> तस्मै देयं ततो ग्राह्यं स च पूज्यो यथाह्यहम् ॥ इति

षट्स्थलस्वरूपं विविच्य प्रदर्श्यते वचनशास्त्रे । एवं इष्टलिङ्गाराधनं षट्स्थलोपासनात्मकं एतद्दर्शनस्य वैलक्षण्यमिति विवेचनीयं विद्वद्भिः । अस्मिन् विषये अल्लमप्रभुः एवं अभिप्रैति—' ದೇಹವೇ ದೇಗುಲವಾಗಿರಲು, ಬೇರೆ ಮತ್ತೆ ದೇಗುಲವೇಕಯ್ಯ, ಪ್ರಾಣವೇ ಲಿಂಗವಾಗಿರಲು ಬೇರೆ ಮತ್ತೆ ಲಿಂಗವೇಕಯ್ಯ. ಹೇಳಲಿಲ್ಲ ಕೇಳಲಿಲ್ಲ, ಗುಹೇಶ್ವರಾ, ನೀನು ಕಲ್ಲಾದರೆ ನಾನೇನಪ್ಪೆನಯ್ಯ. ಅಯ್ಯಾ ಎನ್ನ ಕರಮನಭಾವಕಂಗಳ ಕೊನೆಯಲ್ಲಿ ಬೆಳಗುವ ಪರಂಜ್ಯೋತಿ ಮೂರ್ತಿ ಕೇಳಾ. ಅಂಗದ ಮೇಲೆ ಪರಶಿವಲಿಂಗವಿರ್ದು ಸ್ಥಾವರಲಿಂಗಕ್ಕೆ ಶರಣೆನಲಾಗದು—

एवं च अष्टावरणपञ्चाचारषट्स्थलनिष्ठा एव शैवाःवीरशैवा इत्युच्यन्ते । इतरशैवमतेषु एते विशेषाः न सन्त्येव । भस्मरुद्राक्षमन्त्रादीनां शैवमात्रसाधारणत्वेऽपि लिङ्गधारणदीनां तेषु अभावेन तेभ्य एते विशिष्यन्ते । वीरशैवशब्दः सिद्धान्तशिखामणौ एवं निरुक्तः ॥ (5-15.16.17)

" वीशब्देनोच्यते विद्या शिवजीवैक्यबोधिनी ।
तस्यां रमन्ते ये शैवाः वीरशैवास्तु ते मताः ॥

वेदान्तजन्यं यद्ज्ञानं विद्येति परिकीर्त्यते ।
विद्यायां रमते यः सः वीर इत्यभिधीयते ॥

विद्यायां शिवरूपायां रमन्ते ये विशेषतः ।
तस्मादेते महाभागाः वीरशैवा इति स्मृताः ॥

एतेन शिवजीवैक्यज्ञानवान् वीरशैव इत्युक्तं भवति ।

परंतु इयं निरुक्तिः उक्तिचातुर्यमात्रं इति प्रतिभाति । यतः काश्मीरशैवेऽपि शिवजीवैक्यं अङ्गीक्रियते । अतः वीरशैवसंज्ञा अन्यथैव निर्वाह्या । सिद्धान्तशिखामणावेव "शिवभक्तो महातेजाः" इत्यादिना "शिवनिन्दाकरं दृष्ट्वा घातयेदथवा शपेत् । स्थानं वा तत्परित्यज्य गच्छेद्यद्यक्षमो भवेत् ॥" (9–18) इति श्लोकपर्यन्तं वीरशैवस्य गुणा वर्ण्यते । तेषां परिशीलनेन स्वेष्टलिङ्गोपासकानां एतेषां शैवानां मनोदार्ढ्यं सम्यगवगतं भवेत् । स्थावरलिङ्गपूजामनङ्गीकुर्वाणा अप्येते स्थावरलिङ्गानामपाये यथाशक्ति प्रतिकुर्वन्ति ॥

अथवा शिवभक्तानां शिवलांछनधारिणाम्।
तत्र प्राणान् विहायापि परिहारं समाचरेत्॥ (सि. 9–34)

इत्यादि वाक्यदर्शनेन वीरशैवपदार्थः स्वयमेव हृदयमारुहेत्। एवं गुण-निबन्धनैव वीरशैवसंज्ञा स्यादिति प्रतिभाति। अयमाशयः। इतरे सैद्धान्तिकाः समये प्राप्तेऽपि अहिंसां शान्तिं च उपदिशन्तः स्वधर्मं रक्षितुमशक्ताः अप्रत्यक्षतः धर्महानिमेव आपादयन्ति। वीरशैवसिद्धान्ते तु शिवांशभूतैः जीवैः शिव-निर्मितस्य धर्मस्य अपाये संभवति सति, अहिंसां परित्यज्यापि तद्रक्षणार्थं योद्धव्यमिति वीरव्रतानुष्ठानमुपदिश्यते। एवं धर्मयुद्धरङ्गे असाधारणवीर्यप्रदर्शनात् एते वीरशैवाः, तथा चैते धर्मवीरा इति भाव्यम्। एतादृशमनोभावपरिणामः सन्निवेशविशेषाद्यधीनः स्यादिति पूर्वमेव निरूपितम्। कल्याणकान्त्यादिपरि-शीलनायामपि अयमर्थः स्पष्टं अवगम्येत। तथा च धर्मवीराः शैवाः वीरशैवा इति शक्तिविशिष्टाद्वैतिन इति च निर्णयो युज्यते॥

अथवा महत्यपि सङ्कटे समुत्पन्ने शिवमेकं परित्यज्य नान्यं देवमेते पूजयन्तीति कारणादपि वीरशैवा इति संज्ञा स्यात्। लोके हि समान्यतः सर्वेऽपि नराः तत्तत्फलार्थं नानाविधान् देवान् पूजयन्ति। गीतायामपि (3-12)। 'इष्टान् भोगान् हि वो देवाः दास्यन्ते यज्ञभाविताः' इत्यत्र देवानां अर्चनेन अभीप्सितार्थावाप्तिः कथ्यते। केचित्तु नराः सामान्यत एकं देवं पूजयन्तोऽपि महति सङ्कटे समापन्ने तत्परिहाराय अन्यान् देवान् पूज-यन्त्येव। महान् सङ्कटो हि मनसः स्थैर्यं नाशयेत्। एते तु शैवाः तादृशेऽपि सङ्कटे अन्यदेवस्मरणमप्यकुर्वन्तः शिवैकनिष्ठा वर्तन्ते। तादृशं दार्ढ्यं हि वीर्यमेव। नहि सामान्यजनानां तादृशदार्ढ्यसंभवः। अतस्ते वीरशैवाः इतर-शैवेभ्यो विशिष्यन्ते॥

अयं च वीरशैवीयो धर्मः बहोः कालात् प्रागेव श्रीरेणुकाचार्यैः अगस्त्यमहर्षये उपदिष्टः आसीत्। सोऽपि अगस्त्यः सम्यग्विदितवीरशैवधर्मः

ब्रह्मसूत्राणां वृत्तिमेकां विरचितवान्। तामेव वृत्तिमवलम्ब्य श्रीपतिपण्डिताचार्यः भेदाभेदप्रतिपादकं स्वीयं सूत्रभाष्यं रचयामासेति स एव स्पष्टं कथयति—

अगस्त्यमुनिचन्द्रेण कृतां वैयासिकीं शुभां।

सूत्रवृत्तिं समालोक्य कृतं भाष्यं शिवंकरम् (श्री.भा.पु.2) इति। यथा रामानुजः बोधायनवृत्तिमवलम्ब्य श्रीभाष्यं अरचयत् तथा श्रीपतिः अगस्त्यवृत्तिमवलम्ब्य श्रीकरभाष्यं व्यरचयदिति सिद्धम्। रेणुकाचार्यकृतं उपदेशं मनसि निधाय अगस्त्यः वृत्तिं अरचयदिति भाति। प्राक्कृतः रेणुकोपदेशः सिद्धान्तशिखामणौ अर्वाचीनेन शिवयोगिशिवाचार्येण संगृह्य प्रतिपादितः। यथा पार्थाय कुरुक्षेत्रे रणरङ्गे कर्तव्यप्रचोदनाय श्रीकृष्णेन संक्षेपतया प्रयुक्तः उपदेशः बहोः कालादनन्तरं व्यासमहर्षिणा महाभारतविरचनावसरे गीतारूपेण प्रकाशितः तथायं रेणुकोपदेशः रेणुकागस्त्यसंवादरूपः वीरशैवसिद्धान्तप्रतिपादकः सिद्धान्तशिखामणित्वेन प्रकाशितः शिवयोगिशिवाचार्येण। अयं च सिद्धान्तशिखामणिः भगवद्गीतेव मान्या रेणुकगीतेति व्यवह्रियते॥

अगस्त्यमुनिशार्दूल समस्तागमपारग।

शिवज्ञानकरं वक्ष्ये सिद्धान्तं शृणु सादरं॥ (5-2)

एवं प्रारभते श्रीरेणुकाचार्यः स्वीयमुपदेशम्॥ तथाचायं सिद्धान्तः प्राचीन एव काले रेणुकाद्याचार्यैः समुपदिष्टः वैयक्तिकतया अनुष्ठितः बसवादिशिवशरणकाले सामूहिकतया समाचरितः, लब्धप्रचारातिशयश्च अद्यापि स्वतन्त्रतया स्वशक्त्या स्वीयवैशिष्ट्येन विराजमानः न केवलं वीरशैवान् किंतु सर्वानपि सद्बुद्ध्या सद्भावनयाच संयोजयन् वर्तते॥

इति शक्तिविशिष्टाद्वैतदर्शने,

सिद्धान्ततत्त्वनिरूपणाख्यः

प्रथमोभागः

## द्वितीयोभागः

### प्रथमोध्यायः— संप्रदायस्वरूपम् ॥

सर्वेष्वपि दर्शनेषु सिद्धान्तभागः संप्रदायभगश्चेति भागद्वयं वर्तत इति पूर्वमेवोक्तम्। एतावता प्रबन्धेन सिद्धान्तभागो विचारितः। अथेवं अवशिष्टः संप्रदायभागो विचार्यते ॥

एकस्य दर्शनस्य आन्तरः आकारः सिद्धान्तपदेन उच्यते। अत एव सिद्धान्तभागः आत्मस्थानापन्नः, संप्रदायभागश्च शरीरस्थानापन्न इति वर्णयितुं शक्यम्। आत्महीनं शरीरं शवमेव। तथा सिद्धान्ततत्त्वनिर्णयशून्यः संप्रदायोऽपि। शरीरस्य आत्माधीनत्वेऽपि शरीरमन्तरा आत्मनः ज्ञानेच्छाचेष्टादीनां अनुपपत्त्या शरीरं अवश्योपादेयम्। लब्धशरीरो हि जीवः मुक्त्याद्यर्थं प्रवर्तेत। अतएव मुमुक्षोः शरीरमत्यादरपात्रम्। 'शरीरमाद्यं खलु धर्मसाधनम्' (कु.सं.5-33) इति ह्याह महाकविः कालिदासः ॥

> महता पुण्यपण्येन क्रीतेयं कायनौस्त्वया।
> गन्तुं दुःखोदधेः पारं त्वर यावन्न भिद्यते॥ (गरुडपुराण)

इति हि पौराणिका अप्याहुः। एवं शरीरस्य आत्माधीनत्वेऽपि आत्मापि स्वलक्ष्यसाधने शरीरमेव अपेक्षत इति तदंशे शरीराधीन एव आत्मा। एवं प्रकृतेऽपि दर्शने सिद्धान्तभागस्य आत्मस्थानापन्नत्वेऽपि स आत्मा शरीरस्थानापन्नस्य संप्रदायभागस्य अधीन एव। शरीरात्मनोः संयोगादेव सर्वा अपि प्रवृत्तयः। एवं सिद्धान्तसंप्रदाययोः मेलन एव दर्शनं प्राणवत्तरं वीर्यवत्तरं च भवति। अत एव ह्याहुः "हतं ज्ञानं क्रियाहीनं हता चाज्ञानिनां क्रिया" इति। सिद्धान्तशिखामणावपि अयमर्थः स्पष्टः इति पूर्वमेव मोक्षोपायस्वरूपनिरूपणावसरे प्रतिपादितम् ॥

ज्ञानमात्रान्मोक्षवादेऽपि कर्मणामावश्यकत्वं अङ्गीकृतमेव । परंतु ज्ञानोत्पत्तिपर्यन्तमेव अनुष्ठेयानि, तदनन्तरं तु नानुष्ठेयान्येव इत्यङ्गीक्रियते । कर्मणां हि चित्तशुद्ध्यर्थमेव अनुष्ठानं 'कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते' 'नित्यनैमित्तिकैरेव कुर्वाणो दुरितक्षयम्' इत्यादिप्रमाणसिद्धम् । चित्तशुद्धौ ज्ञानमुत्पद्यते । एवं च ज्ञानोत्पत्त्यनन्तरं कुतःकर्माण्यनुष्ठेयानि इति तेषां आशयः । श्रुतिस्मृतीनां ईश्वराज्ञारूपत्वेन यावज्जीवं अनुष्ठेयान्येव कर्माणि इति इतरेषां आशयः ॥

अस्मिन् विवादे भगवद्गीता विमर्शनदृष्ट्या एवं सिद्धान्तं वक्ति । *यावज्जीवं कर्माण्यनुष्ठेयान्येव । तत्र हेतुत्रयं वर्तते । आद्यं*—'नहि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत् । कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैः गुणैः । (गीता 3-5) शरीरयात्रापि च ते न प्रसिद्ध्येत् अकर्मणः ॥ तदर्थं कर्म कौन्तेय मुक्तसङ्गः समाचर' (1) इत्यादिनोक्तम । अयमाशयः सर्वाण्यपि हि फलानि प्रवृत्तिसाध्यानि । नद्यास्तीरे पक्वानि फलानि सन्ति इति ज्ञानमात्रेण नहि फलप्राप्तिः । अपि तु प्रयत्नपूर्वकतद्देशप्राप्त्यादिरूपव्यापारेण । एवं जीवस्य मोक्षप्राप्तिरपि प्रवृत्तिसापेक्षैव । अन्यथा तूष्णींस्थितस्यापि मोक्षप्राप्तौ सर्वेषां अविशेषेण मुक्तिप्राप्त्यापत्त्या न कोऽपि मोक्षोपाये प्रवर्तेत । प्रवृत्तिस्वरूपे परं मुक्तिकामस्य भुक्तिकामस्य च वैलक्षण्यं आस्तां कामम् ! परं तु तत्तद्विकारस्वरूपानुगुणं प्रवृत्तयः अवर्जनीयाः । प्रवृत्तिश्च शरीरसाध्या इति भगवान् कारुणिकः जीवानां शरीरदानायैव जगत् सृजतीति पूर्वमेवोक्तम् । एवं शरीरस्य प्रवृत्त्यर्थमेव सृष्टत्वेन प्रवृत्तिरूपो व्यापारः शरीरस्य सहज एव । 'स्वभावो दुरतिक्रमः' इति न्यायेन स्वस्वभावः शरीरपातपर्यन्तं दुस्त्यज एव । अयमर्थः 'नहि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत्' इत्यनेनोक्तः । सिद्धान्तसिखामणावपि अयमर्थः—

> कायं विना समस्तानां न क्रिया न च भावना ।
> न ज्ञानं यततो योगी कायवानेव सञ्चरेत् ॥ 16–36

शिवैकज्ञानयुक्तस्य योगिनोऽपि महात्मनः ।
काययोगेन सिद्ध्यन्ति भोगमोक्षादयः सदा ॥ 16–37

इत्यादौ स्पष्टः । एवं शरीरं यावद्वर्तते तावत्पर्यन्तं अन्ततः उदरपूरणार्थं वा कर्माणि सर्वैः ज्ञानिभिरपि क्रियन्त एव । तदिदमुक्तम् 'शरीरयात्रापि च ते न प्रसिद्ध्येदकर्मणः' (गी.3-8) इति । एवं उदरपूरणार्थं प्रवृत्तेरावश्यकत्वे वैधानि इतराणि अवश्यकर्तव्यानि देवतार्चनरूपाणि कुतो वा त्याज्यानि? ये तु महात्मानः पराशरवाल्मीकिविश्वामित्रप्रभृतयः सहस्रशो वत्सरान् परमात्मानुभवनिरताः तपस्येव स्थिता नित्यनैमित्तिकान्यपि नान्वतिष्ठन्, ते तदा औदरिकाण्यपि कर्माणि नाकुर्वन्नेव । औदरिकाणि कर्माणि कुर्वन् विहितानि देवतार्चनादीनि अकुर्वन् कथं वा ज्ञानी स्यात् । गीतापि तान् परिहसति, "कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन् । इन्द्रियार्थान् विमूढात्मा मिथ्याचारः स उच्यते" (3-6) इति । भास्कराचार्या अपि उपहसन्ति 'सन्ध्यावन्दनवेलाया मुक्तोऽहमिति मन्यते । खण्डलड्डुकवेलायां दण्डमाधाय धावति ॥' इति । एवं च यावत्पर्यन्तं शरीरधारणार्थं भोजनादीनि व्यापाराणि क्रियन्ते तावत्पर्यन्तं विहितानि कर्माणि अपरित्याज्यान्येव इति शरीरस्वरूपस्वभावपर्यालोचनया कर्मणामावश्यकत्वमुपपादितम् ॥

द्वितीयो हेतुः—लोकसङ्ग्रहमेवापि संपश्यन् कर्तुमर्हसि ।
यद्यदाचरति श्रेष्ठः तत्तदेवेतरो जनः ॥

स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ।
न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किञ्चन ॥

नानवाप्तमवाप्तव्यं वर्त एव च कर्मणि ।
यदि ह्यहं न वर्तेयं जातु कर्मण्यतन्द्रितः ॥

मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ।
उत्सीदेयुरिमे लोकाः न कुर्यां कर्मचेदहम् ॥

संकरस्य च कर्ता स्यामुपहन्यामिमाः प्रजाः
सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत ।
कुर्याद्विद्वांस्तथाऽसक्तः चिकीर्षुर्लोकसंग्रहम् ॥
न बुद्धिभेदं जनयेत् अज्ञानां कर्मसङ्गिनाम् ।
जोषयेत्सर्वकर्माणि विद्वान् युक्तस्समाचरन्' 3,20-26.

इत्यादिना स्वदृष्टान्तेनैव भगवता विवृत--एतदुक्तं भवति । ज्ञानिनां ज्ञानोत्पत्त्यर्थं कर्मणामनुष्ठानस्य आवश्यकत्वाभावेऽपि न सर्वथा त्याज्यानि कर्माणि । ज्ञानं हि अतीन्द्रियम् । पार्श्वस्थेन तत्कथं ज्ञातुं शक्यम् । एवं च यदि कश्चिदुत्पन्नज्ञानः कर्म नानुतिष्ठति चेत् पार्श्वस्था जनाः 'तस्य ज्ञानमुत्पन्नं अतोऽयं कर्म नानुतिष्ठति' इति इमं रहस्यं अजानन्तः 'अयं महात्मैव कर्म न करोति चेत्' अस्माभिः किमर्थं अनुष्ठेयम् इत्यादि आलोच्य कर्म नाचरेयुः । अपि च ज्ञानस्वरूपेयत्तायाः दुर्वचनत्वेन ममापि तादृशज्ञानिवत् ज्ञानमुत्पन्नमिति भ्रान्त्या च कर्माणि नानुतिष्ठेयुः । एवं च तेषामधोगतिप्राप्तिरवर्जनीया । ते च पामराः यादृशं ज्ञानिनं दृष्ट्वा कर्म त्यक्त्वा दुर्गतिं प्राप्नुवन्ति, तादृशज्ञानिनोऽपि तेषां दुर्गतिप्राप्तौ कारणानि भवन्त्येव । एवं पार्श्वस्थानां जनानां दुर्गतिप्राप्तिकारणत्वेन ज्ञान्यपि अयं स्वयं अधः पतेदेव । बहूनां साधूनां अधःपतनहेतुभूतस्य अस्य कथं वा सद्गतिर्भवेत् । अतः उत्पन्नज्ञानोऽपि पुरुषः अज्ञानिवदेव सर्वं कर्म आचरेत् । तदेतदुक्तम्—सक्ताः कर्मणीत्यादिना । एवं च स्वार्थं कर्मणामननुष्ठानेऽपि परार्थं कर्माण्यनुष्ठेयान्येव । अर्थवमुच्येत । एवं तर्हि ज्ञानिभिः अनुष्ठितानि कर्माणि केवलमभिनयतुल्यानि, सर्वथा निष्फलान्येव इति अनुष्ठानाननुष्ठानयोः अविशेष एव इति कथं भवदिष्टसिद्धिः इति ? तदेतन्निर्मूलम्—नहि वयमपि कर्मणां स्वर्गादिकं फलं ब्रूमः । फलेच्छां विना केवलकर्तव्यदृष्ट्या कर्म कर्तव्यमनीत्येव वदामः । किंच अकरणे लोकपतनजन्यपापस्य अवर्जनीयत्वे, करणे तादृशपापपरिहारस्य च सत्त्वे कथं तानि निष्फलानि भवेयुः ? सन्ध्यावन्दनादीनि हि

नित्यकर्माणि फलेच्छां विनैव अनुष्ठेयानि । अननुष्ठाने च प्रत्यवायजनकानि इति तत्रापि एवं नैष्फल्याक्षेपे कः समाधिः ? अतः फलविचारः अन्यः, कर्तव्यविचारः अन्यः । 'कर्मण्येवाधिकारस्ते मा फलेषु कदाचन । मा कर्मफलहेतुर्भूः मा ते सङ्गोऽस्त्वकर्मणि' (गी.2-47) इति हि वदति भगवान् । अतः अभिनयरूपं वा भवतु, वास्तविकं वा भवतु, परंतु कर्माण्यनुष्ठेयान्येव । नहि अभिनयार्थमपि कर्मानुष्ठानं ज्ञानमात्रान्मोक्षवादे अङ्गीक्रियते । अपि तु सर्वथा त्यगा एवेति अस्ति महान् विशेषः । अन्ततस्तु कर्माण्यनुष्ठेयान्येव ॥

तृतीयश्च हेतुः — 'निश्चयं शृणु मे तत्र त्यागे पुरुषसत्तम ।
त्यागो हि पुरुषव्याघ्र त्रिविधः सम्प्रकीर्तितः ॥
यज्ञदानतपः कर्म न त्याज्यं कार्यमेव तत् ।
यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ॥
एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च ।
कर्तव्यानीति मे पार्थ निश्चयं मतमुत्तमम् ॥
नियतस्य तु सन्यासः कर्मणो नोपपद्यते ।
मोहात्तस्य परित्यागः तामसः परिकीर्तितः ॥
कार्यमित्येव यत्कर्म नियतं क्रियतेऽर्जुन ।
सङ्गं त्यक्त्वा फलं चैव स त्यागः सात्विको मतः ॥ (18,3-9)

इत्यादिना अभिहितः । अत्र 'यज्ञोदानं तपश्चैव' इत्यंशः अवधेयः । मनीषी हि ज्ञानी । एवं च यज्ञादयः मनीषिणामपि पावनानि इति स्पष्टमुक्तम् । तथा च अयमर्थः सूच्यते । ज्ञानोत्पत्त्यनन्तरमपि कर्माण्यनुष्ठेयान्येव । अन्यथा प्रत्यवायप्राबल्यात् उत्पन्नमपि ज्ञानं नश्येदेव । नहि ज्ञानं उत्पन्नमहोरात्रं एकरूपमेवावतिष्ठते । सुषुप्त्यादिना तस्य विच्छेदात् । एवं विच्छिन्नं ज्ञानं पुनः अनुवृत्तौ सुकृतविशेषं अपेक्षत एव । यदि च कर्म नानुष्ठीयेत तदा पावनहेतोरभावात् अपावनत्वं उपासकस्य ज्ञानिनः अवर्जनीयमेव । तथा च

अशुद्धिप्राप्तौ कथं ज्ञानं अविच्छिन्नं स्यात्। अतश्च उत्पन्नस्य ज्ञानस्य संरक्षणार्थं वा कर्माण्यवश्यमनुष्ठेयान्येव। एवं हेतुत्रयेण ज्ञानिनामपि कर्म अवश्यमेवेति स्पष्टं भगवता उक्तम् ॥

ननु तत्र यज्ञादीनि कर्माणि अनुष्ठेयानि इत्युक्तम्। तच्च भवतां विरुद्धमेव। भवन्मते यज्ञानुष्ठानानङ्गीकारात् इति चेत्, यज्ञस्वरूपापरिज्ञान मूलमिदं चोद्यम्। यज देवपूजयाम् इति धातोः निष्पन्नो हि यज्ञशब्दः। येतु सामान्यज्ञानिनः इन्द्रादीनेव देवत्वेन अभिमत्य तत्प्रीत्यर्थमेव कर्माणि कुर्वन्ति ते अनुतिष्ठन्तु कामं अग्निहोत्रादीनि कर्माणि। ये तु सिद्धान्तिनः परमेश्वरमेव देवं मत्वा एकान्तभक्त्या वर्तन्ते ते परमेश्वरप्रीत्यर्थमेव कर्म कुर्वन्ति। एवं च ध्यानार्चनप्रणामस्तुत्यादिकं सर्वमपि देवपूजारूपत्वात् यज्ञपदवाच्यमेव। प्रत्युत देवशब्दस्य परमात्मन्येव विश्रान्त्या देवपूजारूपा यज्ञा अपि तादृशार्चनादावेव मुख्यवृत्ता इति त एव इतरापेक्षया उत्कृष्टयज्ञानुष्ठातार इति कोवा आक्षेपावकाशः। **सिद्धान्तशिखामणावपि** पञ्चयज्ञस्वरूपं अभिहितम्। 'अनेन पञ्चयज्ञेन यः पूजयति शङ्करम्' (सि. शि. 9–25 इति। पञ्चयज्ञाः प्रागेव सूचिताः। एतेन ज्ञानिनामपि कर्मानुष्ठानं सर्वप्रकारेणापि आवश्यकमिति सिद्धम् ॥

ननु तर्हि "न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः" इत्यादावपि कर्मणः अमृतत्वपदवाच्यमुक्तिहेतुत्वं निषिध्य त्यागशब्दवाच्य कर्मसन्न्यासस्यैव मुक्तिहेतुत्वं स्पष्टमुक्तम्। तेन च कर्मणां मुमुक्षवनुष्ठेयत्वं सिद्धमेवेति चेत्—नायं मम समाधेयः" प्रश्नः, "कर्मणैवहि संसिद्धिमास्थिता जनकादयः" "यज्ञो दानं तपश्चैव न त्याज्यं कार्यमेव तत्" (गी.18–5) इति वदन्नेव भगवान्,

> न वेदयज्ञाध्ययनैर्न दानैर्न च क्रियाभिर्न तपोभिरुग्रैः। गी. 11-45
>
> नाहं वेदैर्न तपसा न दानेन न चेज्यया ॥

शक्य एवं विधो द्रष्टुं दृष्टवानसि मां यथा ।
भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन ॥
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप । (54)

इत्यादि कथं स्वोक्तिविरुद्धमेव वदतीति वक्तव्यम् ॥

सङ्गं त्यक्त्वा फलं चैव स त्यागः सात्विको मतः ।
यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते ॥

इति फलाभिसन्धिपूर्वकं कर्मैव निन्द्यते । फलाभिसन्धिरहितं कर्म प्रशस्यते इति उभयोर्विरोधपरिहार इति चेत् प्रकृतेऽपि तुल्यम् ॥

न कर्मणेत्यादिश्रुतौ 'यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते' इति गीतोक्तत्यागशब्द एव वर्तत इत्यवधेयम् । तथा च कर्मणा इत्यस्य फलाभिसन्धिपूर्वकेण कर्मणा इत्यर्थः स्वरसः । एवं च फलाभिसन्धिसहितानां कर्मणामेव बन्धकत्वम्, तद्रहितानां तु बन्धविमोचकत्वमेवेति सिद्धम् । तथोक्तं 'यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः । असक्तो ह्याचरन् कर्म परमाप्नोति पूरुषः' (3-19) । इति सिद्धान्तशिखामणावपि—

'ज्ञाने सिद्धेपि विदुषां कर्मापि विनियुज्यते
फलाभिसन्धिरहितं तस्मात्कर्म न संत्यजेत् ॥ (16-12)
ज्ञानेनाचारयुक्तेन प्रसीदति महेश्वरः ।
तस्मादाचारवान् ज्ञानी भवेदादेहपातनम् ॥

इत्यादि उक्तम् । अत्र च व्याख्यायां मरितोण्टदार्यैः 'न कर्मणा' इत्यत्र कर्मपदं काम्यकर्मपरमिति स्पष्टं अभिहितम् । एवं च आचारशब्दवाच्यं कर्मापि मुमुक्षुभिः अवश्यानुष्ठेयं सिद्धम् ॥

एवं तत्तत्सिद्धान्तोक्तपरमफलसाधनमार्गान्तर्भूतः योऽयमाचारमार्गः सः तत्तत्सिद्धान्तानुगुणं भिद्यत एव । तत्र केषांचिदाचाराणां सर्वसंप्रतिपन्ना श्रुतिरेव मूलम् । यथा 'सत्यं वद धर्मं चर' इत्याद्याः । केषांचित् श्रुतयोऽपि मूलम् ।

श्रुतयश्च बहुविधाः। तत्र अविरोधस्थले सर्वा अपि श्रुतयो ग्राह्या एव। विरोधस्थले विकल्पप्राप्तौ संप्रदाय एव शरणम्। एवं आचारेषु केचन आगममूलाः। आगमा अपि बहुविधा एव। एकेन सैद्धान्तिकेन प्रमाणत्वेन अङ्गीकृतः आगमः अपरेण नाङ्गीक्रियते। एतादृशस्थले विवादप्राप्तौ प्रतिबन्द्येव दीयते। यथा भवदागमाः भवतां प्रमाणं तथा अस्मदागमाः अस्माकं प्रमाणम् इति प्रत्युक्तिः प्रतिबन्दीत्युच्यते। एतेन तेषां तेषां ते ते आगमा उपादेया इत्युक्तं भवति। आचारमार्गे हि सर्वेषामपि सर्वसंप्रतिपन्नं प्रमाणं वक्तुं केनापि न शक्यते। अन्ततः संप्रदाय एव शरणीकरणीयः सर्वेषाम्। गीतायामपि भगवता "कुरु कर्मैव तस्मात्त्वम् पूर्वैः पूर्वतरं कृतम्" इति संप्रदायसिद्धकर्मणां अनुष्ठेयत्वावश्यकत्वमुक्तम्। अतः आचारमार्गः संप्रदायशब्देन सर्वैरपि व्यवह्रियते। *एतच्छक्तिविशिष्टाद्वैतसिद्धान्तसिद्धः संप्रदायः षट्स्थलसंप्रदाय* इत्युच्यते। अत्र च प्राधान्येन कामिकाद्यष्टाविंशत्यागमाः प्रमाणम्॥

षट्स्थलसंप्रदायः न केवलं सांकेतिकः। पूर्वोक्तसिद्धान्ततत्त्वानुसारेण एतत्संप्रदायः प्रवृत्तः। एतदन्तरा एतत्सिद्धान्ते मुक्तिर्न भवितुमेवार्हति। तथाहि—शाङ्करमते मिथ्याभूतस्य प्रपञ्चस्य ज्ञानेन निवृत्तिः मुक्तिरिति ज्ञानादेव मोक्षाभ्युपगमः सङ्गच्छेत। रामानुजमते मुक्तावपि भेदेनैवावस्थानाङ्गीकारात् उपासनाकाले फलकाले च वास्तविकभेदसत्त्वेन उपास्योपासकभावादिकं भगवत्प्रसादान्मुक्तिश्च सङ्गच्छेत। एतत्सिद्धान्तस्तु तदुभयविलक्षणः। जीवेश्वरयोः वास्तविकभेदो नास्त्येव। परं ब्रह्मैव अंशतो जीवभावमनुभवति। प्रपञ्चश्च सत्यः। अतश्च प्रपञ्चसत्यत्वाङ्गीकारात् ज्ञानादेव मोक्षः एतन्मते कथं घटताम्? जीवब्रह्मणोः मुक्तावभेदात् विशिष्टाद्वैतमत इव आन्तं उपास्योपासकभावसमर्थनं कथं घटताम्। सर्वात्मना अविद्याविध्वंस, शिवोऽहंभावना वा कथं उदियात्? अत एतत्सिद्धान्ते साधनमार्ग इतरापेक्षया विलक्षणः विस्तृतः एतत्सिद्धान्ततत्त्वानुगुणः असाधारणश्च विद्यते। अत एवास्माभिः पूर्वमेवोक्तं एतद्दर्शने साधनमार्गपरिशीलनया सिद्धान्ततत्त्वस्वरूपनिर्णयः कर्तव्यो भवत इति॥

## द्वितियोऽध्यायः

### षट्स्थलसंप्रदायवैशिष्टयम्

वीरशैवसंप्रदायस्य षट्स्थलोपासनमार्ग इति व्यवहारो दृश्यते। स्थलशब्देन विश्वस्थितिप्रलयाश्रयत्वात् परमशिवः अभिधीयते। "लोकवत्तु लीलाकैवल्यम्" इति ब्रह्मसूत्रानुसारेण प्रलयकाले स्वस्थावस्थः स्वविलीन-शक्तिः परमशिवः केवलस्सन्नपि पूज्यपूजकलीलायां स्वशक्त्येकांशेन लिङ्गाङ्ग-रूपेण द्विधा विभज्यते। तदानीं पूज्यः परमात्मा महाप्रकाशस्सन् लिङ्ग-स्थलशब्देन व्यवह्रियते। पूजकः परमशिवांशः न्यूनप्रकाशस्सन् अङ्गस्थल-शब्देनाभिधीयते। अत्र सर्वोऽपि व्यवहारः सृष्ट्युन्मुखस्य परमशिवस्य लीलावस्थायामेव। एवं लिङ्गाङ्गद्वैविध्येन समन्वयप्रकारः वीरशैवसंप्रदाये उपपाद्यते। वाचकानां सौकर्याय एतत्संप्रदायवैशिष्ट्यमत्र संगृह्यते॥

"मूलाधारे च हृदये भ्रूमध्ये सर्वदेहिनाम्।

ज्योतिर्लिङ्गं सदा भाति यद्ब्रह्मेत्याहुरागमाः" इति सिद्धान्तशिखा-मणिः, (VI-31); "ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति" इति भगवद्गीता (18-61) "अंगुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः" (कठोपनिषत्) इति श्रुतिश्च सर्वजीविनां हृदये नित्यप्रकाशमानं परमात्मानं प्रस्तुवन्ति। मृतदेहान् विहाय जीवतां सर्वेषां हृदये परमात्मा प्राणरूपेण निवसतीति विश्रुतमेव। हृत्कमलमध्यस्थोऽयमेव परमात्मा षट्स्थल संप्रदाये प्राणलिङ्गमिति व्यवह्रियते। सर्वदा प्रकाशमानत्वात् इदमेव ज्योतिर्लिङ्गमित्यप्यभिधीयते। एतज्ज्योतिर्लिङ्गानुसंधानं साक्षात्कारश्च श्रेयः-कामिनां सर्वेषां अत्यावश्यकम्॥

यथा हृदये अष्टदलकमलमध्ये परमात्मा प्राणरूपेण वर्तते तथा शिरसि सहस्रारकमले भावरूपेण विराजते। अयं च प्रकाशः षट्स्थलसंप्रदाये

भावलिङ्गमिति कथ्यते। इदं च भावलिङ्गं प्रमाणाद्यगोचरं भावैक-समधिगम्यं निराकारम्। अत एव मानवदेहे परमशिवावासभूतयोः हृदय-शिरसोर्वैशद्यं नैर्मल्यं च सर्वदा अवर्जनीयतया संरक्ष्यमिति षट्स्थलसंप्रदायः उद्घोषयति। *निर्मल एव हृदये शिरसि च प्राणरूपेण भवरूपेण च* विराजमानः परमशिव उपासनीयः। हृदिस्थं प्राणलिङ्गं निर्मलेन मनसा, शिरस्थं भावलिङ्गं प्रशान्तया बुध्या च उपास्यम् ॥

यथा हृदये प्राणरूपेण शिरसि भावरूपेण परमशिवो विराजते तथा नेत्रयोः इष्टलिङ्गरूपेण उपासकसौकर्याय प्रकाशते। एवं च परमशिवः मानवदेहे अन्तर्बहिश्च शिरसि हृदये नेत्रयोश्च भावप्राणेष्टलिङ्गरूपेण सहज-तया विराजते। अत एव मानवदेहः देवालय इति स्मर्यते। इमं देवालयं विहाय अन्यत्र देवभावना उपासना च षट्स्थलसंप्रदाये निषिध्यते ॥

जीवानुग्रहायैव परमशिवः स्वशक्त्येकांशेन मानवदेहे एवं रूपेण निवसति। *सत्प्रेरणया सद्भावनया च जीवान् संयोजयितुं परमशिव एव* देहेऽवतिष्ठते। यदा मानवः स्वदेहे परमशिवसद्भावं अनुभवति तदा स्वसन्नि-हितेषु *इतरेष्वपि तथैव द्रष्टुं शक्नोति। अतो देहे सद्भावनाऽस्मिन् संप्रदाये* संस्थाप्यते। देहाभावे शिवानुभवस्य प्रसक्तिरेव नास्तीति देहः धर्मसाधनत्वेन प्रशस्यते। "शरीरमाद्यं खलु धर्मसाधनम्" (कु.सं.5-33) इति कालि-दासोक्तिः सुविदितैव ॥

एवं शिरसि हृदये नेत्रयोश्च प्रकाशमानं देवं मलावृतः संसारी जीवः परिज्ञातुं न पारयति। "अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः" (गी.5-15) इति गीतानुसारेण जीवः अज्ञानेनावृतः स्वान्तरस्थं दिव्यप्रकाशं द्रष्टुं न शक्नोति। यदा मानवः स्वदेहस्थं देवं स्वयमेव ज्ञातुं अनुभवितुं च न शक्नोति तदा अन्येषु शिवभावनां कथं वा स कुर्यात्? स्वानुभवं विना अन्यत्र ब्रह्मदर्शनं न घटत एव। स्वदेहे विराजमानो देवः यदा स्वेनानु-भूयते तदा सर्वत्र स एव विराजत इति बुद्धिः संजायते। तदानीमेव

मानवः अन्यायासत्याचरणं विहाय सत्यनिष्ठो न्यायपरश्च भवेत्। स एव शान्तिं समधिगच्छति। एकविज्ञानेन सर्वविज्ञानश्रुतिरपि तस्मिन्नेव अन्वेति, नेतरेषु अननुभविषु। अतो देहे देवसद्भावज्ञानं मानवस्य संपादयितुं षट्स्थल-संप्रदायः दीक्षाख्यं संस्कारमेकं व्यवस्थापयति। अनया दीक्षया जीवावरण-भूतः अज्ञानरूपो मलः निवार्यते। अन्तर्विद्यमानस्य परमशिवस्य परिचयः मानवाय गुरुणा अनुगृह्यते। शिवज्ञानप्रदानात् मलक्षयाच्च अयं संस्कारो दीक्षेति व्यवह्रियते। अस्यां च दीक्षायां साक्षात्कृतपरमशिवो गुरुरेव प्रधानं पात्रं निर्वहति। स्वदेहे विराजमानं परमशिवं स्वयं अनुभवन् निरञ्जनो विराजते। स एव शिष्यस्य हृदये आच्छादितं अज्ञानं निवारयितुं शिवज्ञानं च उत्पादयितुं पारयति। तादृश एव दीक्षागुरुरपेक्षणीयः॥

एवं च दीक्षया जीवः म्रियते जायते च। शिवांशोऽपि जीवः मलावृतः स्वस्वरूपं विस्मृत्य पशुरिव विषयासक्तः संसरति। स्वीयं चिदानन्दरूपं विस्मृत्य प्रापञ्चिकाभिमानेन मोदते। एतादृशाभिमानं परित्यज्य शिवोऽहंभावनां जीवः दीक्षाया लभते। मालावरणविच्छेदेन जीवस्य पशुजन्म स्वयं म्रियते। देहे विद्यमानस्य निरञ्जनपरमशिवस्य परिचयोऽपि सञ्जायते। अतो दीक्षायां मानवः प्राकृतपशुजीवनविनाशात् दिव्यं जन्मान्तरं लभते गुरुकृपया। अयमंशः कठरुद्रोपनिषदि स्पष्टं प्रतिपाद्यते —

" सर्ववेदान्तसिद्धान्तसारं कर्म यथार्थतः।
स्वयं मृत्वा स्वयं भूत्वा स्वयमेवावशिष्यते " इति

इदं च स्वतोमरणं दीक्षाकाले पशोर्जीवस्य मलक्षय एव। स्वतोमरणं नाम अज्ञाननाश एव। स्वयमवस्थानं च शिवज्ञानोदय एव। चिदानन्दोऽहं-भावनैव जीवस्य पुनर्जन्म। देहाभिमानं सर्वथा परित्यज्य "देहे सर्वत्र शिवप्रकाश एव व्याप्तः। शिव एव सर्वैरिन्द्रियैर्व्यवहरति। सर्वान् विषयान् उपभुंक्ते। अहमपि तदीय एव तद्योगार्थं तस्मिन्नेव वसामि" इत्येवंविषयकं

यथार्थं ज्ञानं जीवो लभते। इदमेव दिव्यं पुनर्जन्म दीक्षाकाले गुर्वनुग्रहेण संपादनीयम् ॥

मलावृते शिष्ये एतादृशं पुनर्जन्म अनुग्रहीतुं कथं प्रभवति गुरुः इत्ययं विषयः सम्यक् प्रतिपाद्यते षट्स्थलसंप्रदाये। अयं च क्रमः प्रगतिशीलैः सर्वैरपि ज्ञातव्यः। अन्तस्स्थं शिवमजानन् पशुः स्वदेहरक्षणाय असभ्यव्यव हारेषु निमग्नः सुखदुःखे अनुभवन् वर्तते। एवं दुराचारेषु सर्वदा वर्तमानोऽपि जीवः कदाचित् शिवकृपया सद्बुद्धिं लभते। स्वकृतपापेभ्यः पश्चात्तापं अनुभवति। अनेन संतापेन शुद्धो भूत्वा सर्वसाक्षिणा शिवेन अनुकम्प्यते। इयमेव भगवदनुकम्पा षट्स्थलसंप्रदाये शक्तिपात इत्यभिधीयते। शक्तिपातो नाम शिवानुग्रहः। शिवानुग्रहादेव पशुः स्वदेहे परदेहे च शिवं विज्ञातुं शक्नोति ॥

एकदा उत्पन्नः शक्तिपातः न कदापि विनश्यति, किंतु क्रमक्रमशः प्रवर्धत एव। यदा शक्तिपातस्तीव्रो भवेत् तदा पशुः देवदर्शनाय प्रयतते। न सर्वेषु जीवेषु शक्तिपातः सभवति किंतु यः पश्चात्तापेन शुद्धयति तस्मिन्नेव। स एव सिद्धये शिवसाक्षात्काराय च प्रयतेत। अत एव—

"मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये।
यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः" (भ.गी. 7-3)

इति भगवद्गीता सिद्धिकामानां शिवज्ञानिनां वैरल्यं निर्दिशति। शक्तिपातप्रबुद्धो जीवः वैषयिकसुखे उदासीनः परमात्मौन्मुख्यानुगुणं बुद्धिविकासं प्राप्नोति। एतादृशं हृदयपरिवर्तनं संपश्यन् सर्वसाक्षी भगवान् परमकारुणिकः स्वयं गुरुरूपेण शिष्यं उपगच्छति। एवं यदा गुरुशिष्यसमागमः संघटते तदा शिष्ये महान् परिणाम उत्पद्यते। शिष्यो यदिच्छति तत्प्राप्नोति। गुरुः शिष्यं पूर्णदृष्ट्या निरीक्ष्य स्वप्रभया तं अनुगृह्य, तदीयं मलावरणं स्वयं आकृष्य निजस्वरूपं उपदिशति। अयं संस्कारो दीक्षेत्युच्यते॥

दीक्षाक्रम एवमाचर्यतेऽस्मिन् संप्रदाये। गुरुः शिलानिर्मितं लिङ्ग-मेकं आहृत्य पञ्चगव्यादिभिः परिष्कृत्य सद्योजातादिमन्त्रैः अभिषिच्य संस्करोति। अनन्तरं शिष्यमस्तके हृदये नेत्रयोश्च विराजमानं शिवप्रकाशं तस्मिन्नावाह्य तल्लिङ्गं प्राणवद्धारणीयमित्यादिश्य शिष्यहस्ते अनुगृह्णाति। "शिष्यस्य प्राणमादाय लिङ्गे तत्र निधापयेत्" (सि.शि.6-23) इति सिद्धान्तशिखामणिः लिङ्गे प्राणावहनं स्पष्टं अभिधत्ते। इदमेव गुर्वनुग्रहीतं इष्टलिङ्गं शिष्येण प्राणवद्धारणीय सदा अर्चनीयं च। हृदये विराजमानं प्राणलिङ्गमेव उपासनायै गुरुकृपया बहिरानीतं अन्तस्स्थप्रकाशसन्दर्शनार्थ-मिति वीरशैवाः इष्टलिङ्गं भावयन्ति॥

किमर्थं इष्टलिङ्गं धार्यमित्ययं विषयः लिङ्गधारणचन्द्रिकायां सप्रमाणं निरूपितः। तदभावे देहे विद्यमानमपि शिवप्रकाशं ज्ञातुं न शक्नोति जीवः। गोदेहे विद्यमानमपि घृतं गोरौषधाय न संपद्यते। गोदोहेन क्षीरं उपलभ्य समुचितया क्रियया घृतं यद्युपलभ्यते तदानीं तत् गोः औषधाय संपद्येत। नोचेत् देहस्थितेनैव घृतेन न कदापि गवे भेषजं सपाद्येत। एवमेव देहस्थिता शिवकला शिवदीक्षया गुरुणा इष्टलिङ्गे यद्यानीयते तदा जीवः स्वान्तस्स्थं प्रकाशं साक्षात्कर्तुं शक्नोति। तादृशेष्टलिङ्गोपासनेनैव जीवः स्वविलीनं शिव-प्रकाशं स्वयमनुभवितुं पारयति। वीरशैवानन्दचन्द्रिकाया अयमाशयः आगमवचनैः सम्यक् प्रकाश्यते—

> "गवि सर्पिः शरीरस्थं न करोत्यात्मपोषणम्।
> निःसृतं कर्मणा चाद्य पुनस्तासां तु भेषजम्॥
> एवमन्तःशरीरस्थः परात्मा परमेश्वरः।
> विनार्चनां बहिर्देवो हितं न कुरुते नृणाम्॥ (पु.58)

एवं च परमशिवः देहे अन्तर्वसन्नपि बहिस्सबंधं विना नाधिगम्यत इत्ययं विषयः अनुभवसिद्धः। मानवदेहः त्रिविधः कारणसूक्ष्मस्थूलभेदेन।

कारणदेहे भावरूपेण सूक्ष्मदेहे प्राणरूपेण शिवसंबन्धो यद्यपि विद्यते। तथैव स्थूलदेहे यदि शिवसंबन्धो न कल्प्येत तदायं स्थूलदेहः सुसंस्कृतो न भवेत्। अतस्तस्यापि शिवसंबन्धावश्यकतां उपपादयति षट्स्थलसंप्रदायः। नेत्रयोर्विद्यमानं शिवचैतन्यं बहिस्स्थमपि मलावृतं जीवं दर्शनमात्रेण न संस्करोति। अन्तस्स्थचित्कला यदि इष्टलिङ्गरूपेण देहे संयोज्यते तदा जीवः यथार्थज्ञानेन शान्तिं लभते। अतो देहत्रयेऽपि लिङ्गसंबन्ध आवश्यकः। भक्तानुग्रहाय परमशिवः इष्टं रूपं स्वीकरोति। अनिष्टं निवार्य इष्टं नित्यसुखं प्रदातुं स एव समर्थः। अतस्तस्यैव इष्टलिङ्गमिति व्यवहारो युज्यते॥

परमशिवो वस्तुतो निष्कलो निराकारश्च। स च अण्डज्योतीरूपः विश्वव्यापकश्च। तादृशः परमशिवः मानवदेहे शिरसि पश्चिमचक्रे अगोचरतया उपासकानां सौकर्याय विराजते। एतदुपासनं उपासकस्य दुश्शकम्। तदर्थमेव शिवः अङ्गुष्ठमात्रे ज्योतीरूपं अवाप्य हृदये निवसति। तदुपासनमपि मन्दाधिकारिणां क्लेशसाध्यमेव भवति। अतस्तत्क्लेशनिवारणाय स एव निष्कलः परमशिवः अङ्गुष्ठपरिमिते इष्टलिङ्गे गुरूक्तदिशा भक्तैरुपास्यते। तादृशेष्टलिङ्गधारणमहत्त्वं मग्गेमायिदेवः सम्यक् प्रस्तौति —

ನೆನೆವುದರಿಂ ನಿರೀಕ್ಷಿಸುವುದತ್ಯಧಿಕಂ ನೆನಹು ನಿರೀಕ್ಷೆಯಿಂ
ದನುದಿನಸಂ ಸಮರ್ಚಿಸುವುದತ್ಯಧಿಕಂ ನೆನಹಿಂ ನಿರೀಕ್ಷೆಯಿಂ
ದನುದಿನಸಂ ಸಮರ್ಚಿಸುವುದರಿಂದ ಶಿವಲಿಂಗಮನಂಗದಲ್ಲಿ
ಸುಮ್ಮನೆ ಧರಿಸಿರ್ಪುದತ್ಯಧಿಕಮತ್ಯಧಿಕಂ ನಿರುತಂ ಶಿವಾಧವಾ ||

(शतकत्रय--शिवाधवशतकं--39)

सदा लिङ्गस्मरणं श्रेयस्साधकम्। स्मरणात् लिङ्गनिरीक्षणं अत्यधिकफलप्रदं भवति। स्मरणनिरीक्षणाभ्यां प्रतिदिवसं लिङ्गार्चनं शीघ्रफलप्रदायि भवेत्। स्मरणनिरीक्षणार्चनेभ्यः देहे लिङ्गधारणं अत्यधिकमिति प्रशस्यते। अतो लिङ्गस्य स्मरणनिरीक्षणार्चनधारणैः मानवः शिरसि विद्यमानां चित्कलां अनुभवितुं पारयति॥

एवं च स्थूलदेहः इष्टलिङ्गसंबन्धाभावे मृतप्रायो भवेत्। एतदर्थमेव शैववैष्णवसंप्रदायेषु स्थूलदेहस्यापि परमात्मसंबन्धपरिकल्पनाय प्रतिष्ठिताया अपि मूर्तेः देहेन्द्रियैरर्चनपद्धतिः परिदृश्यते। वैष्णवसंप्रदाये इयं पद्धतिः अर्चावतारनिष्ठा इत्यभिधीयते। शैवसंप्रदाये प्रतिष्ठितलिङ्गार्चनमित्युच्यते। बहिर्विराजमाने परमात्मनि तृप्तिं अलभमानाः वीरशैवाः गुर्वनुगृहीत एव स्वेष्टलिङ्गे निरंतरोपासनेन मलनिवृत्त्या शान्तिं लभन्ते। लिङ्गधारणस्य अवश्योपादेयत्वं शिवरहस्ये एवं प्रतिपाद्यते—

शिवलिङ्गे शरीरस्थे शिवत्वंचोपपद्यते।
तच्छिवानुभवप्रेप्सुः शिवलिङ्गं हि धारयेत्॥ (वी.चं.59)

अतो वीरशैवः देवदर्शनाय अन्यत्र न धावति। किंतु लिङ्गनिरीक्षणेन स्वदेह एव प्रथमं भगवत्साक्षात्कारेण शान्तो भूत्वा सर्वत्र विराजमानं तमेव प्रकाशं अनुभवति॥

यो हस्तपीठे निजमिष्टलिङ्गं विन्यस्य तल्लीनमनःप्रसारः।
बाह्यक्रियासंकुलनिस्पृहात्मा संपूजयत्यङ्ग स वीरशैवः॥

इति स्कान्दपुराणे हस्तपीठे स्वेष्टलिङ्गाराधनं प्रशस्यते। अत एव 'लिङ्गधारी सदाशुद्धः' (सिद्धान्तशिखामणिः V.63) इति लिङ्गधारिणं प्रस्तौति॥

इदं वीरशैवसंप्रदायवैशिष्ट्यं एवं प्रतिपाद्यते श्री कुमारस्वामिभिः "The Sivalinga form of worship as we have it in the temples is the characteristic feature of Saivism. But the distinctive mark of Vīraśaivism is इष्टलिङ्ग form of worship. That is to say, it advocates the wearing of liṅga, the Idol of Infinity upon the body of each person so that the body shall be a temple fit for God to dwell in. The liṅga worn always on the body of each person becomes symbolic of the presence of God not in the far off heavens but in the very cells of the human body. Thus

Vīraśaivism does countinance the building of the body in order to serve as temple for God "

"The Vīraśaiva Philosophy and Mysticism"-page 118

एवं दीक्षासंस्कृतो लिङ्गधारी पक्वमलो जीवः षट्स्थलसंप्रदाये अङ्गमित्यभिधीयते। अं परमात्मानं गच्छतीति व्युत्पत्त्या परशिवावाप्तियोग्यः शुद्धजीवः परमात्मावासाश्रयोऽपि भवति। जीवः परमशिवस्य लीलाविनोदभूमिस्संपद्यते। इदानीं सः देहाभिमानं परित्यज्य देहं देवालयं इति ज्ञात्वा तत्रत्यपरमशिवाय सर्वकर्मफलानि समर्पयन् त्यागाङ्गं संपद्यते। जीवः स्वाभिमानत्यागात् सर्वानपि बन्धून् भगवदीयानिति प्रीणयन् त्यागी भवति। सर्वैरवश्यं त्यागिभिर्भवितव्यम्। तदानीमेव चिरन्तनं सुखं लभ्येत। त्यागसुखं कीदृशमिति त्यागिभिरेव ज्ञेयम्। अभिमानाहंकारत्यागादपरं सुखं कुत्र वा लभ्येत? भगवते सर्वकर्मफलसमर्पणादधिकं सुखं कुतो वाधिगम्येत? एवं अभिमानत्यागेन देहेन्द्रियैः क्रियमाणं सर्वमपि व्यवहारं भगवत्सन्तोषाय निर्वहन् तत्तत्कालीनसुखदुःखानि प्रसादभावनया अनुभवन् सद्भक्तः भोगाङ्गं संपद्यते। भक्तः परमात्मभोगाय अङ्गं आधारो भवति। देहे भोक्ता शिव एवेति तस्मै सर्वं भक्त्या समर्प्य "तेन त्यक्तेन भुञ्जीथाः मा गृधः कस्यस्विद्धनम्" इति ईशावास्योक्तदिशा शिवानुगृहीतं प्रसादं उपयुञ्जन् भक्तः सुखी भवति। भगवदनुगृहीतान् भोगान् भगवते असमर्प्य यः स्वसन्तोषाय स्वयमेवोपभुङ्क्ते सः तस्करो भवतीति भगवद्गीता भावयति "तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः" इति ॥

मानवैः एतादृशैः स्तेनैर्न भवितव्यम् किंतु सर्वैः प्रसादभोगिभिर्भवितव्यमिति षट्स्थलसंप्रदायः विषयोपभोगलीनं मानववर्गं वीर्यवत्तरया वाण्या प्रबोधयति। प्रसादभावनया भोगानुभवः न दुःखाय किन्तु शान्तये। "प्रसादे सर्वदुःखानां हानिरस्योपजायते" इति गीता मानवाय प्रसादमहत्त्वं उपदिशति। धर्मसाधनभूतोऽयं देहः प्रसादेन परिपोष्यत्वात् 'प्रसादकायः' इति परिगण्यते। अतोऽयं देहः न कदापि शोष्यः, तथैव नाधिकं प्रवर्ध्यश्च।

तथा च शिवसाक्षात्कारार्थं देहः संप्राप्त इति सर्वैरवश्यं सर्वदा ज्ञेयः ॥

अतो वयं प्रसादभोगिनः नहि पदार्थजीविनः, इत्ययमंशः आधुनिकयुवकयुवतिभिः यदि सम्यक् ज्ञायेत तदानीं मानवसमाजे अधुना दृश्यमानं दारिद्र्यं दौर्बल्यं च परिह्रियेत । अमौल्यमपि जीवनं सुन्दरं अमृतं ज्योतिर्मयं च संपद्येत । प्रसादकायानां अस्माकं अमृतपुत्रत्वेन उपनिषदाह्वानमपि तदानीमेव सम्यग्युज्येत । अमृतपुत्रं आत्मानं यो भक्तः भगवद्भोगाङ्गं प्रसादजीविनं च मनुते सः कथं वा संसारे दुःखभाग्भवेत् । 'सम्यक् सारो विद्यतेऽस्मिन्' इति संसारस्तस्य सारभूतेन परमशिवेनाधिष्ठितो नित्यसुखद एव भवेत् । जराव्याधिपीड्यमानो जीवः देहे विराजमानं प्रकाशं विज्ञाय तदुपासनेन वीर्यवत्तरो भवेदेव । अतोऽयं संसार प्रसादजीविनो न कदापि प्रतिबन्धकः, किन्तु अनुकूल एव संपद्यते । प्रासादी जीवितकाले यत्किञ्चित् नाकांक्षति तथैव न शोचति च । सः दुराशो निराशश्च न भवति । येन केनचित् सन्तुष्टः प्रसादी अकिञ्चनोऽपि परिपूर्णः शोभते । सशरीरोऽपि अभिमानत्यागात् अशरीरो विराजते । सर्वव्यवहारनिरतोऽपि निरहंकारतया नित्यतृप्तो भासते । सर्वावृतोऽपि असङ्गोदासीनतया संशोभते । आधुनिकैरेतादृशैः प्रसादिभिर्भवितव्यमिति षट्स्थलसंप्रदायो निरीक्षते ।

एतादृशः प्रसादी सर्वत्र शिवप्रकाशमेव पश्यन् समदृष्ट्या समभावनया च योगाङ्गं संपद्यते । प्रसादी प्रसन्नेन चेतसा समदर्शनो भूत्वा योगी भवति । सर्वत्र परमशिवमेव पश्यन् सर्वानपि जीविनः विश्वव्यापिनि निराकारे परमशिव एव वसतो विज्ञाय, सर्वान् भगवदीयानिति भावयति प्रीणयति च

यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति ।
तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ॥

इति गीतोक्त्या समदर्शनः प्रसादी भगवतः प्रियो भूत्वा न कदापि दुःखभाग्भवति । "समत्वं योग उच्यते" इति गीतोक्तिरपि तस्मिन्नेवान्वेति । "आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन । सुखं वा यदि वा दुःखं स योगी

परमो मतः" (6–32) इति गीतायां भगवान् समदर्शिनं योगिनं परमयोगित्वेन उद्घोषयति। द्वन्द्वातीतस्य योगिनः सर्वोऽपि प्रपञ्च शिवमयो दृश्यते। अत एव "तस्मात्सर्वेषु कालेषु योगयुक्तो भवार्जुन" इति गीतोक्तिरपि सङ्गच्छते॥

एतादृशः त्यागभोगयोगसमन्वयः षट्स्थलसंप्रदाये प्रतिपाद्यते। अनेन समन्वयेन जीवस्य शिवसंबन्धनैरन्तर्ये नैकमपि क्षणं परिहीयत इति ज्ञायते। एवं निरंन्तरसंबन्धात् परिहृतमलो जीवः सर्वतोमुखेन शक्तिविकासेन शिवसायुज्यं इहैव अवाप्य नित्यसुखी भवति॥

यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः।
अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते॥ (कठ. 2-6-14)

इति श्रुतिरपि इममेवार्थं उपोद्बलयति॥

एवं च मानवः षट्स्थलविज्ञानेन देहे बहिरन्तश्च भगवद्व्याप्तिं अधिगम्य अनाचारात्याचारान् परित्यज्य सुखशान्तिसमाधानान्यनुभवितुं शक्नुयात्। वैज्ञानिकेऽस्मिन् युगे ऐहिकसुखसाधनैः स्थिरसुखलाभं अगन्वानेभ्यः आधुनिकेभ्यः षट्स्थलसंप्रदायः त्यागभोगयोगसमन्वयदृष्टिं सर्वाधिव्याधिभैषज्यतया उद्घोषयति॥

पूर्वोक्तं लिङ्गत्रयं अङ्गत्रयं च प्रत्येकं द्विधा विभज्य षट् लिङ्गानि षट् अङ्गानि उपासनार्थं देहे अन्तर्बहिश्च परस्परं मिळित्वैव विराजन्ते। उपास्यः शिवः उपासको जीवश्च देहे प्रत्येकं असंबद्धौ न वसतः। तयोर्नैकदापि वियोगः संभवति। एकः महाप्रकाशः अपरः न्यूनप्रकाशः, तथाप्युभावपि चिदात्मकौ। तत्तदिन्द्रियेषु विराजमानं शिवचैतन्यं तत्तद्विषयं रूपादिकं सहजया रीत्या स्वीकुर्वद्वर्तते। तत्रैव विद्यमानं न्यूनशक्ति जीवचैतन्यं तं तं विषयं तत्रत्यशिवाय समर्प्य तत्प्रसादं उपभुङ्क्ते। एवं च एकैकस्मिन् इन्द्रिये अर्पणभागः जीवं, स्वीकारभागः शिवं च अन्वेति॥

एवं च घ्राणेन्द्रियान्तर्वर्ति शिवचैतन्यं आचारलिङ्गमिति, तत्रैव विद्यमानं जीवचैतन्यं भक्त इति च व्यवह्रियते। भक्तः आचारलिङ्गस्य गन्धपदार्थं श्रद्धाभक्त्या समर्प्य गन्धप्रसादं उपयुज्य धन्यो भवति। तत्रैव रसनेन्द्रियान्तर्वर्ति शिवचैतन्यं गुरुलिङ्गमिति, तत्रैव विद्यमानं जीवचैतन्यं माहेश्वर इति च व्यवह्रियते। माहेश्वरः रसपदार्थं गुरुलिङ्गाय निष्ठाभक्त्या समर्प्य तदर्पितं रसप्रसादं उपयुज्य कृतकृत्यो भवति। तथैव चक्षुरिन्द्रियान्तर्वर्ति शिवचैतन्यं शिवलिङ्गमिति, तत्रत्यं जीवचैतन्यं प्रसादीति च कथ्यते। प्रसादी रूपपदार्थं अवधानभक्त्या शिवलिङ्गाय समर्प्य शेष रूपप्रसादं स्वयमुपयुज्य कृतार्थो भवति। एवमेव त्वगिन्द्रियान्तर्वर्ति शिवचैतन्यं चरलिङ्गमिति, तत्रत्यं जीवचैतन्यं प्राणलिङ्गी इति च व्यवह्रियते। अयं च प्राणलिङ्गी स्पर्शपदार्थं चरलिङ्गाय अनुभवभक्त्या समर्प्य स्पर्शप्रसादं स्वयमुपभुज्य सुखी संपद्यते। श्रोत्रेन्द्रियान्तर्वर्ति शिवचैतन्यं प्रसादलिङ्गमिति, तत्रत्यं जीवचैतन्यं शरण इति च व्यवह्रियते। अयं च शरणः प्रसादलिङ्गाय शब्दपदार्थं आनन्दभक्त्या समर्प्य तद्भुक्तशेषरूपं शब्दप्रसादं स्वयं उपयुज्य सुखी भवति। अन्तरिन्द्रिये मनसि विराजमानं शिवचैतन्यं महालिङ्गमिति तत्रत्यं जीवचैतन्यं ऐक्य इति च व्यवह्रियते। शरणः महालिङ्गाय समरसभक्त्या तृप्तिपदार्थं समर्प्य तत्प्रसादभोगेन तृप्तो भवति। तदानीं मनोरूपे महालिङ्गे विलीनः शरणः तत्रैव तृप्तिप्रसादमनुभवन् महालिङ्गेन एकीभवति। इदमेव ऐक्यसुखं, शिवसायुज्याख्यम् अस्मिन्नेव प्रसादकाये अनुभूयमानं शिवयोगिभिरिति षट्स्थलसंप्रदायः प्रतिपादयति॥

तथा च षट्स्थलज्ञानी सर्वाङ्गलिङ्गीति कथ्यते। एवं निरन्तरोपासनेन शिवप्रसादभोगेन च शिवांशो न्यूनप्रकाशो जीवः शिवे विलीनः ऐक्यसुखमनुभवन् महाप्रकाशः संपद्यते। देहे एकत्र विद्यमानावपि जीवशिवौ रूपादिविषयसमर्पणाय तत्स्वीकाराय च भिन्नौ वर्तेते। जीवः भक्त्या समर्पयति, शिवः प्रेम्णा स्वीकृत्य जीवाय प्रसादं अनुगृह्णाति। अयं च भेदः षट्स्थलो-

पासनमार्गे क्रमेण परिह्रियते। भक्तादिशरणपर्यन्तं भेदो वर्तते। ऐक्यस्थले शरणः जले जलमिव, क्षीरे क्षीरमिव महाप्रकाशे विलीनः स्वीयं सच्चिदानन्दं अनुभवन् अमृतो भवति। चिदात्मकत्वात् जीवः आत्यन्तिकमलनिवृत्त्या चिदानन्दे निमज्जति। इतोऽप्यधिकं किमपरं सुखं कुत्र वा लभेत जीवः॥

एवमेव देहे अन्तर्बहिश्च विराजमानं महाप्रकाशं विज्ञाय सर्वे सद्भक्ताः तत्तत्काले समागच्छन्तं सर्वमपि व्यवहारं असङ्गोदासीनतया निर्वहन्तः तदातदागतानि फलानि शिवप्रसादभावनया स्वीकृत्य शिवेन सह अनुभवन्तः शिवानुभवसुखे निमज्जन्तु॥

---

## तृतीयोऽध्यायः
## पट्स्थलोपासनक्रमः

इतरदर्शनापेक्षया अस्मिन् दर्शने अयं विशेषो वर्तते। सिद्धान्तभागापेक्षया संप्रदायभागस्य प्राधान्यमिति। उपदेशमात्रेणैव अवश्यापेक्षिततत्त्वज्ञानं उदेतुं अर्हति। आचारस्तु केवलया शुद्धया भक्त्या च निर्वर्तनीयः। अतो ज्ञानापेक्षया क्रियाया एव प्राशस्त्यमेतन्मते। शिवशरणवचनेष्वपि अयमंशः कियान् नृत्यतीति सर्वप्रसिद्धमेव। एवं क्रियामार्गस्य प्राधान्यात् सोऽतिविस्तरेण विचार्य इति बुद्ध्यैव पृथगेतत्परिच्छेदारंभः॥

अत्रेदं बोध्यं। जीवेश्वरयोः अभेदः यथा स्वाभाविकः तथा भेदोऽपि स्वाभाविक इति पूर्वं जीवप्रकरणे विस्तरेण साधितम्। एवं परमात्मांशोऽपि जीवः स्वतः परस्माद्भेदं विच्छेदं चापन्नः स्वात्मानं परमात्मनोऽत्यन्तभिन्नमेव सदा जानाति। अतश्च गुरुणा 'त्वं शिव एव' इत्युपदेशे कृतेऽपि कस्य वा तादृशी भावना झटिति जायेत। तादृशभावनाया अभावे न कथं केवलकर्मज्ञानाभ्यां शिवैक्यापत्तिरूपा मुक्तिर्भवेत्। कर्मज्ञानभावानां हि मुक्तिसाधनत्वं पूर्वं प्रसाधितम्। अतः शिवैक्यभावना क्रमश एव जीवस्य उदेतुमर्हति। तादृश-

भावनावशतश्च क्रमेणैव शिवैक्यापरिरूपा मुक्तिर्भवितुमर्हति। भावनायाः वैशिष्ट्यं वचनशास्त्रे स्पष्टं अभिधीयते —

" ಬೀಜದೊಳಗಿಹ ವೃಕ್ಷಫಲವ ಸವಿಯಬಹುದೇ ? ಮಳೆವನಿಯೊಳಗಿರ್ದ ಹುರವಂಜಿಮುತ್ತುಗಳಂ ಸರಗೊಳಿಸಿ ಕೊರಳೊಳು ಧರಿಸಬಹುದೆ ? ಹಾಲೊಳಗಿರ್ದ ತುಪ್ಪವು ಅರಸಿದೊಡೆ ಸಿಕ್ಕುವುದೇ ? ಕಬ್ಬಿನೊಳಗಿರ್ದ ಬೆಲ್ಲವು ಕಣ್ಣಿಗೆ ಕಾಣಿಸುವುದೇ ? ತನ್ನೊಳಗಿರ್ದ ಶಿವತತ್ತ್ವವು ನೆನೆದಾಕ್ಷಣವೇ ಅನುಭವಕ್ಕೆ ಬರ್ಪುದೇ ? ಭಾವಿಸಿ, ತಿಳಿದು, ಮಥಿಸಿ, ಪ್ರಯೋಗಾಂತರದಿಂ ಪ್ರಸನ್ನತ್ವಮಂ ಮಾಡಿಕೊಂಡು ತದನುಭವಸುಖದೊಳೋಲಾಡುವುದು ಅತಿಚತುರನಾದ ಶಿವಶರಣನಿಗಲ್ಲದೆ ಉಳಿದರ್ಗುಂಟೇ ?" "ಎಳ್ಳೊಳಗಣ ಎಣ್ಣೆಯಂತೆ, ಕಲ್ಲೊಳಗಣ ಹೇಮದಂತೆ, ಹಾಲೊಳಗಣ ತುಪ್ಪದಂತೆ, ಕಾಷ್ಟದೊಳಗಣ ಅಗ್ನಿಯಂತೆ ಪುಷ್ಪದೊಳಗಣ ಪರಿಮಳದಂತೆ, ಭಾವದೊಳಗೆ ಶಿವನಿಪ್ಪಂ"

एतादृशी शिवभावना यस्य सुदृढा उदेति तस्यैव शिवैक्यरूपा मुक्तिः सिध्यति। एवं यः उपासकस्य पर्वक्रमः स एव षट्स्थलशब्देनोच्यते। उपासकः षट्सोपानक्रमेण मुक्तिं प्राप्नोतीत्यर्थः। तानि च स्थलानि भक्तमाहेश्वर प्रसादिप्राणलिङ्गिशरणैक्यपदेन व्यवह्रियन्ते। भक्तः क्रमेण माहेश्वरः, माहेश्वरः क्रमेण प्रसादी, प्रसादी क्रमेण प्राणलिङ्गी भवति। प्राणलिङ्गी क्रमेण शरणो भवति। शरणः शिवैक्यो भवति। श्रीनन्दीमठमहाशयः षट्स्थलसाधनमार्गविषये एवं अभिप्रायं मण्डयति। "Vīraśaivism maintains that strict observance of the Vīraśaiva doctrines leads the soul, step by step to complete liberation from avidya The soul, when it has completely forgotten its real nature owing to avidya, is quite incapable of realising its real nature in one stage Therefore, there should be different stages, one above the other. by rising through which. step by step it is possible for the soul to reach realisation; therefore Vīraśaivism has devised six stages, the first of which is called the Bhakta Sthala, where there is complete duality; in the intial

stage, the soul understands duality better than unity with God. *Bhakti*, devotion is the means by which the soul rises. In this way, duality gradually vanishes and unity is achieved." (Hand-book of Vīraśaivism, p. 265.)

चेतनाचेतनात्मकस्य अस्य जगतः अव्यक्तावस्था व्यक्तावस्था च पूर्वमुपपादिता। तत्र व्यक्तावस्थायां विशिष्टाद्वैतप्रक्रिया आदृतेति च निरूपितम्। अव्यक्तावस्थायां तु विशिष्टाद्वैताद्वैलक्षण्यमस्तीति च प्रतिपादितम्। तत्राप्ययं विशेषो वर्तते। अव्यक्तावस्था च द्विविधा सृष्टेः पूर्वावस्था प्रलय-कालिकी, मुक्तिकालिकी च अवस्था इति। अत्र मुक्तिकालिक्यां अवस्थायां किञ्चिदिव अद्वैतसाम्यम्। जीवब्रह्मणोः अभेदेन अवस्थानं हि उभयोःसमा-नम्। परं तु ब्रह्म न निर्विशेषम् अपि तु सविशेषमिति पूर्वमेवोक्तम्। एवं च शङ्कराचार्यसम्मतं विवर्ताद्वैतं निर्विशेषाद्वैतं वा सिद्धान्ते न सर्वथा सम्मतम्, किन्तु परिणामाद्वैतिसम्मतम् सविशेषाद्वैतमेवेति पूर्वं उपपादितम्। तथा च अव्यक्तावस्थायां मध्ये सृष्टिकाले यादवप्रकाशसम्मतं परिणामाद्वैतम्, मुक्तिकाले भास्कराचार्यसम्मतं सविशेषाद्वैतं च अस्मिन् सिद्धान्ते अङ्गीकृतमिति पूर्वं प्रतिपादितम्। एवमङ्गीकारात् अयं सिद्धान्तः न केवलं सर्वश्रुतिसमन्वयरूपः अपि तु सर्वदर्शनसमन्वयरूपः इत्यपि ज्ञेयम्। *अयमर्थः षट्स्थलस्वरूपपरिशील* नया अवगम्येत। तथाच अत्र भक्तमाहेश्वरस्थले भेदोपासनपरे। तथोक्तं माहेश्वरस्थलनिरूपणावसरे— (39, 40, 42, 43)

सिद्धान्तशिखामणौ — 'प्रेरकं शङ्करं बुद्ध्वा प्रेर्यमात्मनमेव च।
भेदाचं पूजयेन्नित्यं नचाद्वैतपरो भवेत्॥

पतिः साक्षान्महादेवः पशुरेष तदाश्रयः।
*अनयोः स्वामिभृत्यत्वं अभेदे कथमिष्यते॥*

भेदस्य कर्महेतुत्वात् व्यवहारः प्रवर्तते।
लिङ्गपूजादिकर्मस्थो नचाद्वैतं समाचरेत्॥

पूजादिव्यवहारः स्यात् भेदेनार्चयतस्सदा ।
लिङ्गपूजापरत्वात् नाद्वैते निरतो भवेत् ॥

एवमादौ द्वैतभावनैव उपादेयेत्युक्तम् । अथ प्रसादिस्थलादारभ्य शरणस्थलपर्यन्तं विशिष्टाद्वैतभावना उपादेयेत्युच्यते । जीवेश्वरभेदज्ञानात् उपासनायां प्रवर्तमानः पुरुषः स्वशक्त्यैव मुक्तिं प्राप्नोतीति तु भ्रमः स्यात् । अत्यन्तभेदवादिनो हि नैय्यायिकानन्दतीर्थादयः भगवत्प्रसादस्य साक्षान्मुक्तिहेतुत्वं नाङ्गीकुर्वन्ति । अपि तु भगवत्प्रसादात् तत्त्वज्ञानं इति नैय्यायिकाः, भगवत्प्रसादात् अपरोक्षज्ञानमिति आनन्दतीर्थीयाः, ततश्च मुक्तिरिति वदन्ति । विशिष्टाद्वैतिनस्तु उपासनायाः मोक्षसाधनत्वं न साक्षात्, अपितु भगवत्प्रसादादेवेति वदन्ति । तेन च स्वप्रयत्नसाध्यो मोक्षः इति अहंकार अपगच्छति । एतत्सिद्धान्तेऽपि महेश्वरप्रसाद एव साक्षान्मुक्तिसाधनम् । तेन च भेदभावनया कर्मसु प्रवृत्तः सर्वमपि तत्कर्म भगवति समर्प्य तत्प्रसादादुपजीवन् प्रसादीत्युच्यते ॥

यद्यपि — लिङ्गनिष्ठादिभावेन ध्वस्तपापनिबन्धनः ।
मनःप्रसादयोगेन प्रसादीत्येष कथ्यते ॥ इति (11–2)

**सिद्धान्तशिखामणौ** प्रसादीत्यस्य मनःप्रसादवान् इत्यर्थः उक्तः, न तु भगवत्प्रसादोपभोगी इति । तथापि तत्रैव अनुपद एव एतादृशमनःप्रसादहेतुः एवमुच्यते । "नैर्मल्यं मनसो लिङ्गं प्रसाद इति कथ्यते
शिवस्य लिङ्गरूपस्य प्रसादादेव सिद्ध्यति (11–6)

इत्यत्र शिवप्रसादादेव मनःप्रसादस्य कथनेन शिवप्रसादकांक्षी उपासकः प्रसादिपदेनोच्यत इति कथनेन न किञ्चिद्बाधकम् । सर्वोऽपि परमात्मनः प्रसाद एव इति उपभुञ्जानस्य परमात्मप्रसादः सुलभ इति किं वक्तव्यम् । इयमेव प्रक्रिया विशिष्टाद्वैतसम्मता ॥

किं च एषु स्थलेषु शिवोऽहंभावनायाः कर्तव्यत्वेऽपि शरणस्थलपर्यन्तं भेदो वर्तत एव । परमात्मविषयिणी भक्तिः क्रमेण परिपक्वा यदा सती-

पतिभावे विश्राम्यति तदा साधकः शरण उच्यते। अयं च सतीपतिभावः विशिष्टाद्वैतमतेऽपि समान एव। अतो मध्यकाले विशिष्टाद्वैतभावनापि वर्तत इति वक्तुं शक्यम् ॥

ऐक्यस्थले जीवब्रह्मणोरैक्यात् अद्वैतम् सञ्जायते। एवं च द्वैते उपक्रान्ता, विशिष्टाद्वैतमपि क्रोडीकुर्वती भक्तिः ऐक्ये विश्राम्यति इति सर्वदर्शनसमन्वयः संभवत्येव। एतादृशं ऐक्यं एवं वर्ण्यते श्री राधाकृष्णमहोदयैः—

"The goal of lif e is communion with the Supreme. 'It is a life of realisa tion, an inner intuitive vision of God when man achiev es absolute freedom and escapes from the blind servitud e to ordinary experience."

—Occasiona l speeches and writings, page 254.

अथ भक्तमाहेश्वरादिस्थलानि यथासंप्रदायं निरूपयामः। स्थलशब्दश्च एवं निरुक्तः अनुभवसूत्रे मग्गेमायिदेवैः।

यत्रादौ स्थीयते विश्वं प्राकृतं पौरुषं यतः।
लीयते पुनरन्ते च स्थलं तत्प्रोच्यते ततः॥ (2–4)
आलयः सर्वदेहानां लोकानां सर्वसंपदाम्।
यद्भवेत् परमं ब्रह्म स्थलं तत्प्राहुरक्षतम् ॥ इति ॥ (2–8)

चेतनाचेतनात्मक समस्तजगतां उत्पत्तिलयाधारं जगदुपादानकारणभूतं उपास्यं ब्रह्मैव स्थलशब्दार्थः। एवं उपासको जीवोऽपि ब्रह्मांशत्वेन स्थलशब्दवाच्यो भवति। तत्रैवोक्तम्—स्थलं नाम परं तत्त्वं शिवरुद्रादिसंज्ञकम्।

(अ.सू. 2–12)　　उपास्योपासकत्वेन स्वयमेव द्विधा भवेत् ॥ इति ॥

तत्र उपास्यं ब्रह्म लिङ्गस्थलशब्देन, उपासको ब्रह्मांशः अङ्गस्थलशब्देनोच्यते। यथोक्तं तत्रैव — लिङ्गस्थलं उपास्यं स्यात् अङ्गस्थलमुपासकः।

(2–12)　　उपास्यत्वं तथोपासकत्वं च परमः शिवः॥
अप्रच्युतात्माभेदेन स्थितः सन् आत्मलीलया।
(2–13)　　स्वशक्त्या युगपत् साक्षात् प्राप्त एव स्वयं क्रमात्॥

अत्र 'अप्रच्युतात्मा' इत्यनेन एवं मायावशात् ब्रह्मणः जीवभावापत्तावपि स्वरूपतो निर्दोषत्वादिकं उक्तम्। उपास्यस्य ब्रह्मणः शिवत्वेऽपि उपासकस्यापि शिवत्वं कुतोऽङ्गीकरणीयमित्यत्र हेतुरपि तत्रोच्यते—(2–15)

यथा—नाशिवस्य शिवोपास्तिर्युज्यते जन्मकोटिभिः।
शिवस्यैव शिवोपास्तिरिति नागश्रुतिस्थितिः॥ इति॥

अत्र 'नारुद्रो रुद्रमर्चयेत्', 'रुद्रो भूत्वा रुद्रं यजेत' इत्यादि श्रुतयोऽभिमताः। एवं च स्वयं शिवरूपत्वादेव स्वरूपतः शिवभूतो जीवः शिवत्वविकासाय सहजतया प्रवर्तते। जलं हि जलमेवाभिधावेत्। अतः उपासकोऽपि वस्तुतः शिव एव सन् मलावृतत्वात् न्यूनशक्तिकः स्वीयं प्रकाशस्वरूपं अजानन्नपि शिवार्चनायां प्रवर्तेत॥

लीयते गम्यते यत्र येन सर्वं चराचरम्।
तदेतल्लिङ्गमित्युक्तं लिङ्गतत्त्वपरायणैः॥ (अ.सू. 3-3)
शिव एव हि लिङ्गं च लिङ्गरूपी स्वयं शिवः।
सर्ववेदान्तवाक्यानां प्रतिपाद्यः शिवः स्वयम्॥ (क्रि.सा 1–36)
सर्वतत्त्वावलम्बश्च जगत्कारणमव्ययः।
महालिङ्गस्वरूपोऽयं शङ्करस्स सदाशिवः॥ (Hid 1–37)
तल्लिङ्गमेव सूत्रेषु व्यासेनापि विचारितम्।
तद्ब्रह्म केवलं लिङ्गं ज्ञातव्यं च मुमुक्षुभिः॥ (Hid 1–38)

एवं निर्वचनात् लिङ्गपदं परब्रह्मवाचीति सिद्धम्॥

ननु स्थलशब्दस्य ब्रह्मपरत्वेन लिङ्गशब्दस्यापि तत्परत्वे उभयोः पर्यायत्वं सिद्धम्। तथा च घटो घटः इतिवत् लिङ्गस्थलम् इति पदमपि अनर्थकं आपद्येत। नहि पर्यायपदयोः युगपत्प्रयोगो युक्तः इति चेत्—उच्यते। स्थलशब्दः उपास्योपासकोभयसाधारणः शब्दः। लिङ्गशब्दश्च उपास्यमात्रासाधारणः। तथाच घटो द्रव्यं इत्यादाविव सामान्यविशेषशब्दयोः युगपत्प्रयोगे न किंचित् बाधकम्॥ एवं अङ्गशब्दोऽपि तत्रैव निरुक्तः—

अनाद्यन्तमजं लिङ्गं तत्परं परमं प्रति ।
यद्गच्छति महाभक्त्या तदङ्गमिति निश्चितम् ॥ (4–2)
अं भवेत् परमं ब्रह्म तद्गतं तत्परायणम् ।
अङ्गस्थलमिति प्राहुः अङ्गतत्त्वविशारदाः ॥ इति ॥ (4–3)

तथा च लिङ्गस्थलं उपास्यं ब्रह्म, अङ्गस्थलं उपासकं ब्रह्म इति उपास्योपासकस्वरूपांशे ऐक्योपयोगि सौहार्दं सूचितम् । एवं सूचनात् उभयोः सामरस्यरूपं ऐक्यं संभवत्येवेति सयुक्तिकमुक्तम् । लिङ्गाङ्गसामरस्यमेव खलु एतस्मिन् दर्शने मुक्तिरिति सांप्रदायिकैः व्यवह्रियते । तथोक्तं तत्रैव अनुभवसूत्रे—

लिङ्गस्थलं शिवः साक्षात् जीवात्माङ्गस्थलं भवेत् ।
लिङ्गाङ्गस्थलयोरैक्यं शिवजीवैक्यमेव हि ॥ इति ॥

एवं च एतादृशैक्योपपादनमेव अङ्गस्थललिङ्गस्थलशब्दैः सूच्यते । लिङ्गाङ्गैक्यं सुविशदं उपपाद्यते वचनेषु— "ಅಂಗವು ಲಿಂಗದಲ್ಲಿ ಸಂಬಂಧವಾದವರ ಲಿಂಗವೆಂದೇ ಕಾಂಬುದು. ಕೀಟೋಽಪಿ ಭ್ರಮರಾಯತೆ ಎಂಬ ನ್ಯಾಯದಂತೆ ಅಂಗ ಲಿಂಗವ ನೋಂಕಿ ಲಿಂಗವಾಯಿತ್ತಾಗಿ, ನೀವೆಂದೇ ಕಾಂಬುದು. ಲಿಂಗಮುಂತಾಗಿಯೇ ನಡೆ, ಲಿಂಗಮುಂತಾಗಿಯೇ ನುಡಿ, ಲಿಂಗಮುಂತಾಗಿಯೇ ನೋಡುವವರಾಗಿ, ಅಂಗೇಂದ್ರಿಯಂಗಳೆಂಬುದಿಲ್ಲ. ಅವೆಲ್ಲವೂ ಲಿಂಗೇಂದ್ರಿಯಂಗಳಾಗಿರ್ದ ಕಾರಣ ಲಿಂಗವೆಂದೇ ಕಾಂಬುದು. ಸರ್ವಾಂಗಲಿಂಗ ನಿಮ್ಮ ಶರಣ"

"ಜ್ಯೋತಿಮುಟ್ಟಿದ ಬತ್ತಿ ಎಲ್ಲಾ ಜ್ಯೋತಿಯಪ್ಪವಯ್ಯ. ಸಾಗರವ ಮುಟ್ಟಿದ [illegible]

ವರೆಲ್ಲ ನಿಮ್ಮಂತಪ್ಪರಯ್ಯ."

अङ्गस्थलं त्रिविधम्, त्यागाङ्गभोगाङ्गयोगाङ्गभेदात् । तत्र त्यागाङ्गं भक्तमाहेश्वरभेदेन द्विविधं, भोगाङ्गं प्रसादिप्राणलिङ्गिभेदेन द्विविधम्, योगाङ्गं शरणैक्यभेदेन द्विविधम् । आहत्य उपासकस्वरूपं षोढा भिद्यते । इदमेव षट्स्थलशब्देनोच्यते ॥

तत्र संसारहेयताबुद्ध्या, तत्त्यागाय प्रथमं प्रवृत्त्या आद्यद्वयं त्यागाङ्गशब्देन उच्यते । शिवभुक्तविषयैकभोगवत्वात् प्रसादिप्राणलिङ्गिनोः भोगाङ्ग-

मिति व्यवहारः । शरणस्थले सतीपतिभावेन परमात्मना सह मेलनात्, ऐक्यस्थले परमात्मना अत्यन्तं विलयाच्च शरणैक्यस्थलयोः योगाङ्गमिति व्यवहारः सुसंघटित एव ॥

एवं उपासकानुग्रहाय परमात्मापि षड्विधानि रूपाणि स्वीकरोति । तत्प्रकारश्चेत्थम्—लिङ्गस्थलं इष्टलिङ्गप्राणलिङ्गभावलिङ्गभेदेन त्रिविधम् । तत्र इष्टलिङ्गं द्विविधम् । आचारलिङ्गं गुरुलिङ्गं चेति । प्राणलिङ्गमपि द्विविधं, शिवलिङ्गं चरलिङ्गं चेति । भावलिङ्गमपि द्विविधं, प्रसादलिङ्गं महालिङ्गं चेति । तत्र इष्टलिङ्गं स्थूलं भक्तानुग्रहाय आकारविशेषमापन्नं सदा धार्यम् ।

> इष्टावाप्तिकरं वाक्यं अनिष्टपरिहारकम् ।
> इष्टिः पूजा तया नित्यं इष्टं पूजितमादरात् ॥ (अ.सू 3–8)

इत्यनेन भक्तैः पूजयितुमर्हं परमात्मस्वरूपं इष्टलिङ्गपदेनोच्यते ॥

> इष्टमर्थं स्वभक्तानां अनुयच्छति सर्वदा ।
> तदिष्टलिङ्गमित्याह तस्मादाथर्वणिकी श्रुतिः ॥

एवं उपास्यं ब्रह्म उपासकस्य परमप्रेमास्पदं स्वप्राणसमं दिव्यज्योतीरूपं इष्टलिङ्गमिति भावना एतद्दर्शने प्रसृता ॥

तथैव प्राणलिङ्गमपि सूक्ष्मं हृदाकाशगतं अन्तर्यामिस्वरूपम् । तदधीनत्वात् शरीरप्राणनादेः प्राणलिङ्गपदेन तस्य व्यवहारः । तस्यैव आकारविशेषौ शिवलिङ्गाचारलिङ्गे । एतत्संज्ञायां हेतुरनुपदं वक्ष्यते ॥

भावलिङ्गं तु उक्तोभयमूलकारणं प्रमाणाद्यगोचरं भावैकसमधिगम्यमिति भावलिङ्गपदेन उच्यते । एवं च उपासकानां षण्णां अनुग्रहाय उपास्यं लिङ्गमपि षड्विधं भवति इति लिङ्गस्थलान्यपि षट् भवन्ति । अत्र यद्यपि भक्तस्य आचारलिङ्गमेव उपास्यम्, माहेश्वरस्य गुरुलिङ्गमेव उपास्यम्, इत्यादिर्नायं नियमः । किंतु सर्वेषामप्युपासकानां सर्वाण्यपि लिङ्गान्युपास्यान्येव, तथापि प्राधान्यविवक्षया विभागः कृत इत्यवसेयम् ॥

उपासकस्यापि शरीरयात्रार्थं कर्म अवर्जनीयमित्युक्तम्। कर्मसु प्रवृत्तं उपासकं रागद्वेषादयः पीडयेयुरेव, प्रवृत्तेः रागद्वेषाविनाभूतत्वात्। अतः कथं उपासकस्योपासनायां प्रवृत्तिः स्यादिति-शङ्कायां यस्तु स्वार्थमेव सर्वदा करोति तमेव कर्माणि बध्नन्ति। तथोक्तं गीतायाम् "ते त्वघं भुञ्जते पापाः ये पचन्त्यात्मकारणात्" इति। यस्तु परार्थमेव कर्म करोति, न तं कर्माणि बध्नन्ति। अतः उपासकः सर्वमपि शिवमयं ज्ञात्वा स्वयमपि शिवो भूत्वा सर्वं कर्म कुर्यात्। एवं कर्तरि स्वस्मिन्, करणे इन्द्रियादौ, विषये रूपादौ सर्वत्रापि शिवस्वरूपत्वबुद्धिमतः कथं वा कर्म लेपकं स्यात्। गीतायामपि हि ब्रह्मभावः एवं उपवर्ण्यते—

ब्रह्मार्पणं ब्रह्म हविः ब्रह्माग्नौ ब्रह्मणा हुतम्।
ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना॥ (4–24)

इत्यादौ सर्वत्र ब्रह्मभावेन कर्म कुर्वतः ब्रह्मप्राप्तिरभिधीयते। अयमेव सर्वत्र ब्रह्मभावः एतत्सिद्धान्ते षट्स्थलोपासनशब्देनोच्यते। उपास्यः उपासकः करणानि विषयाः इति सर्वमपि शिवरूपमेवेति भावनैव षट्स्थलज्ञानपदेनोच्यते। एतादृशज्ञानवानेव षट्स्थलज्ञानीत्युच्यते॥

यथा परमात्मा इममण्डं सर्वं व्याप्यावतिष्ठमानः तत्तत्कार्यं निर्वहति तथा उपासकशरीरेऽपि तत्र तत्र विद्यमानं सर्वं कार्यं निर्वहति। अत एव बाह्यस्य एतस्य जगतः ब्रह्माण्डपदेन व्यपदेशः। उपासकशरीरस्य तु पिण्डाण्डपदेन व्यपदेशः। ब्रह्मणा सृष्टः अण्डः ब्रह्माण्डः। उपासकशरीरं पिण्डाण्ड उच्यते। एवं उपासको जीवः पिण्डशब्देनोच्यते। तथोक्तं सिद्धान्तशिखामणौ— बहुजन्मकृतैः पुण्यैः प्रक्षीणे पापपञ्जरे।

शुद्धान्तःकरणो देही पिण्डशब्देन गीयते॥ इति॥ (5–31)

एवं च उपासकः पिण्डशब्दाभिधेयः। ततः तस्य शरीरमपि पिण्डशब्देन कथ्यते। यथा तत्रैव 'पिण्डाण्डस्थं यथाऽऽकाशं' इत्यारभ्य

"यथा न भिन्नमाकाशं घटेषु च मठेषु च।
तथाण्डेषु च पिण्डेषु स्थितो ह्यात्मा न भिद्यते॥ (19–59)

इत्युक्तम्। एवं च उपासकशरीरं पिण्डाण्डशब्देन कथ्यते। शरीरं हि पञ्चज्ञानेन्द्रियैः पञ्चकर्मेन्द्रियैः मनसा अन्तःकरणेन च व्याप्तं सत् तत्र असाधारणविषयग्रहणपूर्वकं सुखदुःखादिभोगसाधनं भवति। तत्र इन्द्रियादिकं करणं। तद्ग्राह्यः रूपादिर्विषयः। सर्वानपि शिवत्वेन भावयतः उपासकस्य न पुण्यपापादिकर्मप्रसङ्गः॥

तत्र नासाग्रवर्ति घ्राणेन्द्रियं आचारलिङ्गात्मकं भाव्यम्। प्राणवायुसंचरणार्थत्वेन नासायाः तत्र विद्यमानत्वात् घ्राणस्य आचारलिङ्गमिति नाम। जिह्वाग्रे रसनेन्द्रियं गुरुलिङ्गात्मकम्। गुरुर्हि मंत्रमूर्तिः। षडक्षरीमन्त्र एव षड्रसतां प्राप्त इति संप्रदायः। एवं च रसनेन्द्रियस्य तादृशषड्रसग्राहकत्वात् रसनेन्द्रियं गुरुलिङ्गात्मकम्। नेत्रवर्तिरूपग्राहकं चक्षुरिन्द्रियमेव शिवलिङ्गात्मकम्। शिवो हि प्रकाशात्मकः। नेत्रं च प्रकाशग्राहकम्। अतः चक्षुरिन्द्रियं शिवलिङ्गात्मकम्। चर्मवर्तिस्पर्शग्राहकं त्वगिन्द्रियं चरलिङ्गात्मकम्। त्वगिन्द्रियस्य शरीरे सर्वत्र व्यापनात् चरलिङ्गात्मकं तत्। कर्णवर्ति शब्दग्राहकं श्रोत्रेन्द्रियमेव प्रसादलिङ्गात्मकम्। गुर्वनुग्रहरूपोपदेशः श्रोत्राभावे न कार्यकारी। अतः श्रोत्रेन्द्रियं प्रसादलिङ्गात्मकम्। एतत्पञ्चेन्द्रियमूलकन्दभूतहृदयगतं मनइन्द्रियम्। महालिङ्गस्य सर्वमूलकारणत्वात् तत्तुल्यं मनोऽपि महालिङ्गात्मकम्। एवं तत्तदिन्द्रियवर्तिनः चैतन्यस्य आचारादिलिङ्गव्यवहारः उपासकस्य लिङ्गस्य च नित्यसंबन्धं उत्पादयति॥

एवं कर्मेन्द्रियेषु रेचनादिवायुसंचारहेतुत्वात् पाय्विन्द्रियं आचारलिङ्गम्। आनन्दहेतुत्वात् उपस्थेन्द्रियं गुरुलिङ्गात्मकम्। मङ्गलावहत्वात् पादेन्द्रियं शिवलिङ्गम्। पदार्थदानहेतुत्वात् पाणीन्द्रियं चरलिङ्गं भवति। उपदेशादिप्रसादहेतुत्वात् वागिन्द्रियं प्रसादलिङ्गं भवति। सर्वेन्द्रियमूलं मनः पूर्ववदेव महालिङ्गं भवति। एवं कर्मेन्द्रियेष्वपि तत्तदिन्द्रियान्तर्वर्तिनः शिवचैतन्यस्य लिङ्गत्वव्यपदेशेन उपासकः सर्वत्र शिवसंबन्धं अनुभवति। देहरूपे

देवालये उपासकः शिवोऽहंभावनया शिवव्यवहारं शिवप्रेरणानुसारेण निर्वहन् शिवप्रसादं स्वीकृत्य सुखी अवतिष्ठते ॥

एतेषु महालिङ्गमेकं गोप्यमुखमुच्यते, तस्य प्रपञ्चातीतत्वात्। इतरत् पञ्चकन्तु प्रकटमुखं उच्यते। सद्योजात-वामदेव-अघोर-तत्पुरुष-ईशानाः पञ्च आचार-गुरु शिव-चर-प्रसादलिङ्गानां पञ्चानां क्रमशः बाह्यमुखानीति व्यपदेशः॥ एवं षड्विधैः इन्द्रियैः षड्विधार्थग्रहणहेतुभूतः हस्तः षड्विधो भवति। हस्तो हि ग्रहणसाधनम्। अत एतेषां विषयग्रहणसाधनत्वेन हस्तत्वेन व्यवहारः। तत्र चित्त-बुद्धि-अहङ्कार-मनो-ज्ञान-भावाः षडन्तःकरणानि षट् हस्तान् उपासकस्स्वषड्विधविषयार्पणाय विनियुङ्क्ते ॥

एवं परमात्मनि विद्यमाना अखण्डा शक्तिः षोढा, परमात्मनो रूपधारण-वेलायां स्वयमपि षोढा भवति। क्रियाशक्तिः ज्ञानशक्तिः इच्छाशक्तिः आदिशक्तिः पराशक्तिः चिच्छक्तिश्चेति। आचारलिङ्गे क्रियाशक्तिः, गुरुलिङ्गे ज्ञानशक्तिः, शिवलिङ्गे इच्छाशक्तिः, चरलिङ्गे आदिशक्तिः, प्रसादलिङ्गे परा-शक्तिः, महालिङ्गे चिच्छक्तिश्च वर्तते ॥

परमात्मन एव उपासकजीवभावापत्त्या परमात्मनि विद्यमाना शक्तिः उपासकेऽपि सूक्ष्माकारेण वर्तत एव। परं तु तस्या भक्तित्वेनैव व्यवहारः। परमात्मशक्तिः संसारसृष्टिहेतुर्भवति। जीवे विद्यमाना भक्तिरूपा शक्तिस्तु निवृत्तिहेतुर्भवति। तथोक्तम् अनुभवसूत्रे (2-27)

शक्तिः प्रवृत्तिराख्याता निवृत्तिर्भक्तिरीरिता।
शक्त्या प्रपञ्चसृष्टिः स्यात् भक्त्या तद्विलयो मतः ॥ इति ॥

इयं च भक्तिः षड्विधोपासकभेदेन षड्विधा भवति। श्रद्धाभक्तिः, नैष्ठिकीभक्तिः, अवधानभक्तिः अनुभवभक्तिः आनन्दभक्तिः समरसभक्तिश्चेति। भक्ते श्रद्धा, माहेश्वरे नैष्ठिकी, प्रसादिनि अवधानभक्तिः, प्राणलिङ्गिनि अनुभव-भक्तिः, शरणे आनन्दभक्तिः, ऐक्ये समरसभक्तिश्च प्रतिष्ठिता। एवं उपास्यो-

पासकयोः तत्करणानां सर्वेषामपि परमात्मरूपत्वात्, प्रपञ्चस्य ब्रह्मपरिणामभूतस्य परमात्मरूपत्वात् ब्रह्मीभूतः उपासकः ब्रह्मात्मकैः करणैः ब्रह्मात्मकान् रूपादि-विषयान् देहे तत्तदिन्द्रियगोलकवृत्तिने परमात्मने समर्प्य तत्प्रसादभोगेन सुख-परिणामवान् भवति ॥

तत्र श्रद्धाभक्तियुक्तः भक्तःघ्राणेन्द्रियांतवर्तिनि क्रियाशक्तियुक्ते आचार-लिङ्गे चित्तहस्तद्वारा मेयपदार्थगतं गन्धं समर्प्य तदनुभूतं गन्धप्रसादं स्वयं उपभुज्य कृतकृत्यो भवति । एवं उपासकः निष्ठाभक्तियुतः सन् बुद्धिहस्तेन रसनेन्द्रियान्तर्वर्तिने ज्ञानशक्तिविशिष्टाय गुरुलिङ्गाय रस्यपदार्थगतं रसं समर्प्य रसप्रसादं स्वीकृत्य सुखीभवति । तदानीं उपासकः माहेश्वर इति व्यवह्रियते । गन्धप्रसादस्वीकारसमये यः भक्त इति व्यपदिश्यते स एव भक्तिविकासेन रसप्रसादस्वीकारसमये माहेश्वर इति व्यपदिश्यते । स एव उपासकः अवधान-भक्तियुतः इच्छाशक्तियुताय चक्षुरिन्द्रियान्तर्वर्तिने शिवलिङ्गाय अहङ्कारहस्तेन रूपपदार्थं समर्प्य तद्रूपप्रसादानुभवेन सुखी भवति । तदानीं सः प्रसादीति व्यपदिश्यते । स एव प्रसादी अनुभवभक्तियुतः त्वगिन्द्रियांतवर्तिने आदि शक्तियुताय चरलिङ्गाय मनोहस्तेन स्पर्शपदार्थगतं स्पर्शं समर्प्य तत्प्रसाद-स्वीकारेण सुखी भवति । तदानीं सः प्राणलिङ्गी इति व्यवह्रियते । एवं प्राणलिङ्गी आनन्दभक्तियुतः श्रोत्रेन्द्रियांतवर्तिने पराशक्तियुताय प्रसादलिङ्गाय ज्ञानहस्तेन श्रव्यपदार्थगतं शब्दं समर्प्य शब्दप्रसादभोगेन सुखी भवति । इदानीं उपासकः शरण इति व्यपदिश्यते । एवं सः शरणः समरसभक्तियुतः मनइन्द्रियान्तर्वर्तिने चिच्छक्तियुताय महालिङ्गाय भावहस्तेन स्मर्तव्यपदार्थगतं तृप्त्याख्यं पदार्थं समर्प्य तत्प्रसादभोगेन तृप्तो भवति । तदानीं सः महालिङ्गेन एकीभूतः सन् ऐक्यसुखमनुभवति । एवं कर्मेन्द्रियादिष्वपि शिव-भावना शिवार्पणं शिवप्रसादश्च योज्यते । एवं शरीरे विद्यमानेषु आधार–स्वाधिष्ठान – मणिपूरक – अनाहत–विशुद्धि–आज्ञेय–स्थानेष्वपि आचारादि षड्लिङ्गानामवधानं संभाव्य तत्रतत्र विद्यमानं शिवप्रकाशं मनसा ध्यात्वा

साक्षात्कर्तुं प्रयतेत मुमुक्षुः। वीरशैवानन्दचन्द्रिकायां एतत्सर्वं इतोऽपि विस्तरशः प्रतिपादितम् ॥

एतावता उपासकः जगत् शिवात्मकं पश्यन् सर्वमपि कार्यं शिवप्रीत्यर्थं कृत्वा यथालाभसन्तुष्टः, शिव इव उदासीनवदासीनः, शत्रुमित्रेषु साधुपापिषु च समबुद्धिः, स्तुतिनिन्दयोः अविकारः, सर्वत्र समदर्शनः, शिवमेव चिन्तयन् संसारं निर्वहति। "ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः।

लिप्यते न स पापेन पद्मपत्रमिवाम्भसा" (5-10) इति

गीतोक्त्यनुसारेण उपासकः मनसा शिवं सर्वदा स्मरन्, देहेन प्रापञ्चिकं कर्म फलकामनां विना कर्तव्यदृष्ट्या करोति चेत् तदा तस्य पापसंस्पर्शो न संभवति। कर्मवासनापि न संघटते। फलापेक्षया स्वसंतोषाय अभिमानेन यत् कर्म आचर्यते तदेव उपासकं बध्नाति। "सङ्गं त्यक्त्वा फलानि च"- यः कर्म कुरुते सः कृत्वापि न लिप्यते। अत्र बसवार्यवचनं उत्तमं निदर्शनं भवति। शिवपूजार्थं, गुरुलिङ्गजङ्गमाराधनार्थमेव प्रापञ्चिको व्यवहारः तेन निरुह्यते नतु स्वोदरपूरणाय, स्वपत्नीपुत्रयोगक्षेमार्थं चेति स्पष्टं सः स्वाशयं वदति। यादृशं कर्म कृतमपि, तस्य फलप्रदाता परमेश्वर एव, तस्य भोक्ता स एव, वयं तु जीवाः तत्प्रसादभोगिनः, अतएव नित्यसुखिनः दुःखासंस्पृशः। अयं भावः अस्मिन् षट्स्थलसंप्रदाये निबद्धः॥

एतदुपरि अयं संशयः समुन्मिषेत्। भक्ताद्यैक्यान्तैः उपासकैः एकैक एव विषयः प्रसादभावनया उपभुज्यते वा? एकैकविषयोपभोगः अनुभवविरुद्धः। सर्वोपभोगस्तु भक्तादीनां षण्णां एकदा एकत्र संभव एव संघटेत। षण्णां उपासकानां क्रमिकत्वेन, युगपत् तेषां ऐक्यं तु असंभवि। अतः कथमिदं निर्वाह्यम् इति चेदत्र वदामः। सत्यं क्रमिकाण्येव इमानि स्थलानि षट्। अद्यापि भक्तादिस्थलेष्वेव, भक्तभक्तः, भक्तमाहेश्वरः भक्त-प्रसादी, भक्तप्राणलिङ्गी, भक्तशरणः, भक्तैक्यः इति प्रत्येकः षोढा अवान्तर-भेदो वर्तत एव। अतः तत्तद्विषयार्पणवेलायां भक्त एक एव इतरावस्थां च

भजते इति एकेनैव सर्वविषयोपयोगः प्रसादरूपेण संभवत्येव। एवं माहेश्वरादिस्थलेष्वपि द्रष्टव्यम्। एवमवान्तरभेदवशात् षट्त्रिंशत्स्थलानि भवन्ति। एतेषु षट्त्रिंशत्स्थलेषु पुनरपि सूक्ष्मदृष्ट्या भक्तभक्तमाहेश्वरः इत्यादि रूपेण विभागे च षोडशाधिकद्विशतस्थलानि संभवन्ति। सिद्धान्तसिखामणौ तु षण्णां स्थलानां पिण्डस्थलादारभ्य ज्ञानशून्यस्थलपर्यन्तं एकोत्तरशतस्थलात्मना विभागं प्रदर्श्य तदनुरोधेन विस्तरशो निरूपणं कृतम्। परंतु सर्वं शिवात्मकमिति भावना आवश्यकीति तु एतत्स्थलतत्त्वम्॥

भक्तमाहेश्वरादीनां संग्रहपरिचयस्त्वेवमुच्यते। गुरुलिङ्गजङ्गमानामैक्यधीविशिष्टः, गृहीतशिवदीक्षः, लिङ्गधारी, भस्मरुद्राक्षादिधारी, पञ्चाक्षरजपपरायणः भक्त इत्युच्यते। उक्तार्थे अतिशयितनिष्ठावानेव माहेश्वरः। पूर्वोक्तदिशा परमात्मप्रसादं भुञ्जन्, मनःप्रसादं प्राप्तः प्रसादीत्युच्यते। एतत्त्रिविधं कर्मप्रधानमिति व्यपदेशः। इतरं त्रितयं तु ज्ञानप्रधानम्। तथोक्तं सिद्धन्तशिखामणौ—भक्तो माहेश्वरश्चेति प्रसादीति च कीर्तितः।

. कर्मप्राधान्ययोगेन . . . इति॥ (12-1)

परमेश्वरस्य सर्वान्तर्यामित्वेन प्राणात्मकत्वानुसंधानवान् प्राणलिङ्गी। सत्याः पतिमन्तरा यथा गत्यन्तरं नास्ति तथा शिवमेव शरणं प्रपन्नः शरणः शिवैक्यमापन्नः ऐक्यवान्। सिद्धान्तशिखामणौ एते विस्तरशो निरूपिताः॥

भक्तादिलक्षणं तु स्कान्दे शङ्करसंहितायाम् एवं निरूपितम्।

सदाचारः शिवे भक्तिः लिङ्गे जङ्गम एकधीः।  
लाञ्छने शरणे भक्तिः भक्तस्थलमनुत्तमम्।  
परस्त्रियं परार्थं च वर्जयेद् भावशुद्धिमान्।  
लिङ्गनिष्ठानियुक्तात्मा माहेश्वरमहास्थलम्॥

लिङ्गार्पितपदार्थस्य सुखं भुक्त्वा समाहितः।  
अनर्पितविवर्जी च प्रसादिस्थलमुत्तमम्॥

वायौ प्राणात्मके लिङ्गं लिङ्गे प्राणास्समाहिताः ।
सुखदुःखद्वयं नास्ति प्राणलिङ्गिस्थलं भवेत् ॥

पतिर्लिङ्गं सती चाहं इति युक्तः स्वयं प्रभुः ।
प्रापञ्चिकसुखं नास्ति शरणस्थलमुत्तमम् ॥

षधर्मयो न षट् भावाः नास्ति चाष्टविधार्चनम् ।
निर्भावो निजलिङ्गैक्यः शिखिकर्पूरयोगवत् ॥

षड्विधलिङ्गानां स्वरूपं तु एवं प्रदर्शितं शङ्करसंहितायाम् ।

आचारलिङ्गं घ्राणाख्यं भक्तस्थलसमाश्रयम् ।
निवृत्तिकलयोपेतं गन्धग्रहणसाधनम् ॥

गुरुलिङ्गं च जिह्वाख्यं महेशस्थलसंश्रयम् ।
विद्याकलासमायुक्तं रसग्रहणसाधनम् ॥

नेत्राख्यं शिवलिङ्गं च प्रसादिस्थलसंश्रयम् ।
प्रतिष्ठाकलया युक्तं रूपग्रहणसाधनम् ॥

त्वगाख्यं जङ्गमं लिङ्गं प्राणलिङ्गिस्थलाश्रयम् ।
शान्त्याख्यकलया युक्तं स्पर्शग्रहणसाधनम् ॥

प्रसादलिङ्गं श्रोत्राख्यं शरणस्थलसंश्रयम् ।
शान्त्यतीतकलोपेतं शब्दग्रहणसाधनम् ॥

मानसं तु महालिङ्गं ऐक्यस्थलसमाश्रयम् ।
शान्त्यतीतोत्तरोपेतं सर्वग्रहणसाधनम् ॥

एवं मानसादीनां करणरूपत्वेऽपि, तन्निष्ठचेतनस्यैव घ्रेयादिपदार्थस्वीकारसाधनत्वेन लिङ्गरूपत्वव्यपदेशः । एवं च सर्वाङ्गलिङ्गी शरणः प्रपञ्चे स्थितोऽपि अनासक्तस्सन् शिवव्यवहारमेव निर्वहति ॥

## चतुर्थोऽध्यायः

### इष्टलिङ्गस्वरूपम्

लिङ्गं नाम विश्वाधिष्ठानं परंज्योतिः। विश्वं स्वात्मनि लीनं गमयतीति लिङ्गं विश्वभाजनमिति व्यवह्रियते। एवं च विश्वाधारभूतं ब्रह्मचैतन्यं लिङ्ग-शब्देनोच्यते। इदं च विश्वव्यापकं ज्योतिः अखण्डरूपेण सर्वत्र विराजते। अस्य च लिङ्गस्य षट् अवयवाः स्मृताः, वृत्तं (अधःपीठः) कटिः (मध्यप्रदेशः) वर्तुलं (ऊर्ध्वपीठः) गोमुखम्, नाळः (ऊर्ध्वपीठस्थो रन्ध्रः) गोळकं (तद्रन्ध्र-निविष्टः उपरितनभागः) विश्वे एतादृशाः षडवयवाः व्यवस्थया सुसघटिता वर्तते। इदं चाखण्डलिङ्गं बसवेश्वरः एवं प्रस्तौति.॥

"ಜಗದಗಲ ಮುಗಿಲಗಲ ಮಿಗೆಯಗಲ ನಿಮ್ಮಗಲ, ಪಾತಾಳದಿಂದತ್ತತ್ತ ನಿಮ್ಮ ಶ್ರೀಚರಣ, ಬ್ರಹ್ಮಾಂಡದಿಂದತ್ತತ್ತ ನಿಮ್ಮ ಶ್ರೀಮುಕುಟ, ಅಗಮ್ಯ, ಅಪ್ರಮಾಣ ಅಗೋಚರಲಿಂಗವೇ ನೀವೆನ್ನ ಕರಸ್ಥಳಕ್ಕೆ ಬಂದು ಚುಳುಕಾದಿರಯ್ಯ."

एवं अखण्डं लिङ्गं अगम्यमगोचरं सत् अनन्तब्रह्माण्डान् स्वात्मनि क्रीडीकृत्य स्वयं स्वप्रकाशं स्वतन्त्रं विराजते॥

अस्य चाखण्डलिङ्गस्य अध.पीठभागे पञ्चाशद्वर्णानि, मध्यप्रदेशे सुप्तिङन्तानि पदानि, उपरितनपीठे ब्रह्माङ्गरूपा मन्त्राः, गोमुखे भुवनानि समस्तानि, नाळे भूम्यादिशिवान्तानि षट्त्रिंशत्तत्त्वानि, गोळके षड्विधाः कलाः व्याप्ता वर्तन्ते। षडवयवभूता इमे अध्वानः वर्णाध्व-पदाध्व-मंत्राध्व-भुवनाध्व-तत्वाध्व-कलाध्वपदैः व्यवह्रियन्ते। परमात्मदर्शनसाधनानि अध्वान इत्युच्यन्ते। एतैरध्वभिः प्रयाणं कुर्वन् जीवः षडध्वव्यापकं महाप्रकाशं पश्यन्नपि षडध्वातीतं निष्कलं निराकारं परंज्योतिस्साक्षात्कृत्यैव शान्तो भवेत्। इदमेव षडध्वशोधनमिति षट्स्थलसंप्रदाये पारिभाषिकया रीत्या अभिधीयते॥

ऊर्ध्वमायायां निष्कलः परमशिवः स्वशक्तिक्षोभमात्रेण अधोमायायां लील्या विश्वाकारेण विराजते। स्वशक्त्याः ईशघटनमात्रेण विश्वात्मकः

सन्नपि शिवः निजस्थितौ निराकार एवावतिष्ठते। एवं शिवः अध्वमयोऽपि अध्वातीतो वर्तते। अत एव जगत्यस्मिन् सर्वे वर्णाः, पदानि, मन्त्राः, भुवनानि, तत्त्वानि, कलाश्च लब्धप्रतिष्ठा वर्तन्ते। नाशरहितेन नित्यसुन्दरेण शिवेन अधिष्ठितत्वात् अयं विश्वः सत्य एव न मिथ्या। शिवेच्छया तल्लीलायै तदीयशक्तिप्रसारितो विलास एवायं विश्वः। अत्र शिवविरहितं शिवाद्भिन्नं न किंचिदपि वस्तु विद्यते। अतः शिवं अध्वानं अध्वपतिमपि वदन्ति अध्ववेत्तारः। अध्वमयमिमं विश्वं शिव एव स्वीयया चित्कलया आवेष्ट्य वर्तते। एतादृशचिदावरणसत्त्वेनैव सर्वे वयं सुसंबद्धाः सुसंघटिताश्च वर्तामहे। इदमेव चित्कलारूपं आवरणं षडध्वातीतं दिव्यं तेजः। एतद्दर्शनार्थं षडध्वपरिचयः आवश्यकः॥

षडध्वस्वेव निरतो जीवः षडध्वातीतं तेजः साक्षात्कर्तुं न शक्नुयात्। माता शिशोः पुरतः विविधाः शालभञ्जिकाः प्रसार्य स्वकृत्यनिरता भवति। शिशुर्यदि शालभञ्जिकास्वेव निरतो भवेत् तदा मातृसौख्यं न लभेत। एवमेव शिवमायाप्रसारितेषु षडध्वस्वेव जीवो यदा रममाणः कालयापनां करोति, तदा सः न कदापि शिवानुभवं लभेत। यदा शिशुः पुरोविद्यमाना-कर्पकेभ्यो विश्रान्तो रोदिति तदा माता शीघ्रमागत्य शिशवे स्तन्यं ददाति। तथैव मायापहृतैश्वर्यः क्षीणशक्तिर्जीवः शिवमायामेव पश्यन् यावत्पर्यन्तं वर्तेत तावत्पर्यन्तं षडध्वस्वेव सचरन् तदतीतं शिवं ज्ञातुं, शिवानन्दं अनुभवितुं च न शक्नोति॥

अत एव शिवः कृपया गुरुजङ्गमरूपेण स्वयमेवागत्य जीवाय षडध्वातीतं स्वीयं निष्कलं लिङ्गप्रकाशं दर्शयति। इदमेव इष्टलिङ्गमिति प्रागेव निवेदितम्। जगति ज्योतिर्दर्शनं न सर्वसाध्यम्। अतो लिङ्गरूपे मानवदेहे विद्यमानां स्वीयां चित्कलां सुसंस्कृते लिङ्गे समावेश्य तदिष्टलिङ्गं शिष्यहस्ते गुरुरनुगृह्णाति। इदमपि इष्टलिङ्गं विश्ववत् षडवयवं सत् षडध्वमयमेव वर्तते। मानवदेहोऽपि लिङ्गरूप एव विद्यते। देहे नाभेरधोभागे, आधारे, स्वाधिष्ठाने, मणि-

पूरके च वर्ण-पद-मन्त्ररूपेण शिवो विराजते। नाभेरूर्ध्वं हृदये भुवनरूपेण, कण्ठे तत्त्वरूपेण, भ्रूमध्ये कलारूपेण शिवो वर्तते। एवं सकला वर्णाः, पदानि, मन्त्राः, भुवनानि, तत्त्वानि, कलाश्च मानवदेहे सूक्ष्मरूपेण विद्यन्ते। विश्वं व्याप्य शिवावरणं यथा विराजते तथा मानवदेहं सर्वं व्याप्य शिरसः पश्चाद्भागे अणुचक्रे नारिकेलमध्यस्थबीजपरिमितः चित्प्रकाशः सदा विराजते। अयमेव प्रकाशः देहे सर्वत्र व्याप्य सर्वेन्द्रियाणां प्रेरको विराजते। इममेव प्रकाशं "श्रोत्रस्य श्रोत्रं मनसो मनो यत्" इत्यादिना केनोपनिषत् प्रस्तौति। एतदेव वीरशैवैरभ्यर्च्यमानं महाप्रकाशं चिल्लिङ्गम्। एतत्साक्षात्कारायैव गुर्वनुगृहीतस्य स्वेष्टलिङ्गस्यैव, नत्वन्यस्य, समर्चनं वीरशैवैर्निर्वर्त्यते॥

इष्टलिङ्गमपि जगल्लिङ्गमिव षडवयवमेव वर्तते। अत्रापि वृत्तं कटिः, वर्तुलम्, गोमुखं, नाळः, गोळकमिति षडवयवा विद्यन्ते। अखण्डब्रह्माण्डात्मकं विश्वं यथा शिवः स्वयमेव स्वीयचित्कलया आच्छादयति तथा गुरुः शिष्यमस्तके विराजमानया चित्कलया इष्टलिङ्गं समावेशयति। एवं च विश्वव्यापकं दिव्यप्रकाशं शिष्यः स्वेष्टलिङ्ग एव साक्षात्कृत्य कृतकृत्यो भवति॥

वीरशैवैरुपास्यं इष्टलिङ्गं विश्वव्यापकस्य ब्रह्मतेजसः प्रत्यभिज्ञापकम्। जगति सर्वत्र यत् ज्योतिः व्याप्तं वर्तते तदेव अत्रापि समाविश्यते। अत्र यत् अनुभूयते तदेव सर्वत्र दृश्यते उपासकैः। अतः इष्टलिङ्गोपासनं विश्वाराधनमिति वीरशैवदार्शनिका अभिप्रयन्ति। "यदिहास्ति तदन्यत्र यन्नेहास्ति तन्न कुत्रचित्" इति व्यासोक्तिः महाभारते यथा समुपयुज्यते तथा इष्टलिङ्गेऽपि सम्यगन्वेति॥

विश्वव्यापको दिव्यप्रकाशो यतः वीरशैवैः स्वेष्टलिङ्ग एव श्रवणमनननिदिध्यासनोपासनैः साक्षात्क्रियते अतः एकविज्ञानेन सर्वविज्ञानश्रुतिः अस्मिन् दर्शने अन्वर्थतया समन्वेति। शिवस्य सर्वसुहृत्त्वात् सर्वत्र प्रेमविशिष्टत्वाच्च तदुपासका अपि सर्वसुहृदः, सर्वत्र प्रेमयुक्ताश्च वर्तन्ते। अतो वीरशैवाः प्रेमपूजका, विश्वप्रेमिण इति, सर्वप्रेमास्पदत्वात् शिवस्य इष्टलिङ्गमिति च व्यव-

द्वारः सुशोभते । अतः प्रेमालये लिङ्गे विग्रहभावना न संघटते । अङ्गुष्ठपरिमितः प्रकाशो यथा हृदये तथा तावत्परिमित एव प्रकाशः अत्रापि इष्टलिङ्गे भासत इति षट्स्थलज्ञानिनो भावयन्ति ॥

> तस्माल्लिङ्गं परं ब्रह्म सच्चिदानन्दलक्षणम् ।
> निजरूपमिति ध्यानात् तदवस्था प्रजायते ॥ (12–40)

इति सिद्धान्तशिखामणौ श्रीरेणुकाचार्यः अगस्त्यमहर्षये लिङ्गस्वरूपं निर्वक्ति । अतो हीष्टलिङ्गं अन्तर्लिङ्गान्न भिद्यते ॥

> लीनं प्रपञ्चरूपं हि सर्वमेतच्चराचरम् ।
> सर्गादौ गम्यते भूयः तस्माल्लिङ्गमुदीरितम् ॥
> लिङ्गं शैवमिदं साक्षात् शिवशक्त्युभयात्मकम् ।
> ध्यातव्यमर्चनीयं च भुक्तिमुक्तिफलेच्छुना ॥
> अतो यत्नेस्सदा लिङ्गं सर्वकारणकारणम् ॥

इति सूक्ष्मागमे लिङ्गस्वरूपं सम्यक् प्रकाश्यते ।

एतादृशं महालिङ्गं सर्वेषां प्राणिनां हृदये निर्लिप्ततया विराजते । तदेव गुरोः प्रसादाद्बहिरायातं इष्टलिङ्गरूपेण वीरशैवैर्धार्यते, नित्यमर्च्यते च तादृशदिव्यतेजोदर्शनानुभवाधिगमसौकर्याय ॥

एतादृशं इष्टलिंगं सदा धार्यमित्यत्र किं प्रमाणम् ? भौतिकदेहस्य इष्टलिङ्गेन नित्याभियोगश्च किंफल इत्याशङ्कायां किमुत्तरं ददाति षट्स्थलसंप्रदायः । अत्र सिद्धान्तशिखामणिः शिवभक्तस्य लिङ्गधारणावश्यकतां सम्यगेवं प्रतिपादयति ॥

> " भूतिरुद्राक्षसंयुक्तः लिङ्गधारी सदा शुचिः ।
> पञ्चाक्षरजपोद्योगी शिवभक्त इति स्मृतः ॥ "

इति भक्तस्वरूपनिरूपणावसरे लिङ्गधारणस्य अवश्योपादेयता निर्दिश्यते । अत्र भूतिरुद्राक्षादिधारणविषये शैवेषु न विवादः । लिङ्गधारणविषये

स्त्यस्ति विवादः । वीरशैवातिरिक्तशैवैः लिङ्गधारणं न क्रियते । अतो लिङ्गधारणस्य अवश्यकर्तव्यत्वे किं प्रमाणमिति चेत्—अत्र समाधानं लिंगधारणचन्द्रिकायां विस्तरश उक्तम् । " अमृतस्य देवधारणो भूयासम् ", " पाणिमन्त्रं पवित्रम् " इत्यादिश्रुतयः, " लिंगस्य धारणं पुण्यं सर्वपापप्रणाशनम् । ये धारयन्ति हृदये लिंगं चिद्रूपमैश्वरं । न तेषां पुनरावृत्तिः" इत्याद्यागमाश्च प्रमाणानीति तु संक्षेपः। परं तु इदमत्र तत्त्वम् । कारणाद्यागमेषु लिंगधारणस्य अवश्यकर्तव्यत्वं उक्तम् ! आगमाश्च श्रुतिवदेव स्वतान्त्रप्रमाणानि इति पूर्वमेवोक्तम् । अस्पष्टार्थानां श्रुतीनां च अर्थः आगमानुसारेणैव निर्णेयः इति च पूर्वमेवोक्तम् । अतः आगमाः तदुपष्टम्भाः श्रुतयश्च लिंगधारणस्य आवश्यकत्वे प्रमाणानि ॥

" पवित्रं ते विततं ब्रह्मणस्पते प्रभुर्गात्राणि पर्येषि विश्वतः अतप्ततनूर्न तदामो अश्नुते " इत्ययं ऋग्वेदीयो मन्त्रः लिङ्गधारणं प्रस्तौति । तस्मात् शिवलिङ्गं देहे सदा शुच्यशुचिकालेऽपि धर्तुं योग्यत्वात् पवित्रमिति व्यवह्रियते । लिङ्गरूपस्य ब्रह्मणः शरीरं चिद्रूपं विततं इष्टप्राणभावभेदेन बहुविधम् । हे ब्रह्मणस्पते परमशिव, ते—तव तत् ब्रह्मपदवाच्यं चिद्रूपं शरीरं षट्स्थलात्मना षडिन्द्रियेष्वपि तिष्ठति । प्रभुः निग्रहानुग्रहसमर्थस्त्वं विश्वतः समस्तानि गात्राणि भक्तशरीराणि पर्येषि व्याप्नोषि, धार्यमाणस्सन् लिङ्गरूपशरीरद्वारा भक्तांगसंयुक्तोऽसि । अतप्ततनूः, तप्ता वेधामन्त्रक्रियादीक्षात्रयेण निर्दग्धपापपञ्जरा तनूः यस्य न भवतीति सः अतप्ततनूः दीक्षात्रयरहितः अलब्धदीक्षासंस्कारः जीवः, आमः अपरिपक्वान्तःकरणः सन्, तत् परशिवस्वरूपं इष्टलिंगं नाश्नुते—न प्राप्तुं शक्नोति । पुरुषः स्त्री वा दीक्षासंस्कारेण पारिशुद्ध्यमधिगम्य देहे लिंगं धारयेदिति नियमोऽनेन मन्त्रेण व्यवस्थापितो दृश्यते । पवित्रलिंगमूर्तेः संपर्केण भक्तदेहोऽपि पवित्रः संपद्यते ॥

अमुमेवाभिप्रायं अवलंब्य रेणुकभगवत्पादाः अगस्त्यमहर्षये देहे लिंगधारणस्य आवश्यकतामेवं निवेदयन्ति सिद्धान्तशिखामणौ ॥-

ऋगित्याह पवित्रं ते विततं ब्रह्मणस्पते ।
तस्मात्पवित्रं तल्लिंगं धार्यं शैवमनामयम् ॥ (6–58)

ब्रह्मेति लिङ्गमाख्यातं ब्रह्मणः पतिरीश्वरः ।
पवित्रं तद्धि विख्यातं तत्संपर्कात्तनुः शुचिः ॥ (6–59)

अतस्ततनुरज्ञो वै आमः संस्कारवर्जितः ।
दीक्षया रहितः साक्षात् नाप्नुयाल्लिंगमुत्तमम् ॥( 6–60)

अघोराऽपापकाशीति या ते रुद्र शिवा तनूः ।
यजुषा गीयते यस्मात् तस्माच्छैवोऽघवर्जितः ॥ (6–61)

अत्रेदमवधेयम् । लिङ्गधारणं द्विविधम्, आन्तरं बाह्यं चेति । आन्तरं धारणं नाम सदा परमात्मनो मनसि चिन्तनमेव । बाह्यं तु प्रसिद्धम् । तत्र आन्तर्लिंगधारणविषये न विवादः । परं तु तत् सर्वेषा अशक्यम् । वैराग्य-ज्ञानयुक्ताना स्थिरचेतसा योगिनामेव अन्तर्लिङ्गानुसन्धाने रुचिः सञ्जायते ॥

यावद्देहपातं हि कर्माण्यवर्जनीयानि इत्युक्तम् । तत्र कर्मणामवर्जनीयत्वे प्राप्ते तस्य शिवार्चनबुद्ध्या कर्तव्यत्वे च निश्चिते, अर्चनादीनां मूर्तिमन्तरा असंभवेन मूर्तिरावश्यकी । ननु च अस्त्येव देवालये मूर्तिः इति चेत् तादृशमूर्त्यर्चने न सर्वेषामधिकारः । शैवागमोक्तदीक्षाविशेषवता आगमिकानामेव तत्र अधिकारः आगमेषु उक्तः । अतः प्रतिष्ठितलिङ्गार्चनम् न संभवदुक्तिकम् । किंच कार्यवशात् देशान्तरगमने प्राप्ते तत्र प्रतिष्ठितलिंगाभावे लिङ्गदर्शन-मप्यसंभवि । परंतु दहरान्तर्वर्तिनो ज्योतिर्लिङ्गस्य उपास्यत्वं श्रुतिसिद्धम् । "दहरं" विपाप्मं परवेश्मभूतं यत्पुण्डरीकं पुरमध्यसंस्थम् । तत्रापि दहं गगनं विशोकस्तस्मिन् यदन्तस्तदुपासितव्यम्" इति दहरोपासनं दहराधिकरणे विहितम् । अन्तर्याम्युपासनं हि तत् । अन्तर्विद्यमानस्य परमात्मनः उपासनं दुष्करम् । अतः एतत्सर्वपर्यालोचनया लिंगधारणं अस्मिन् सम्प्रदाये विधीयते ॥

हृदये परमात्मप्रकाशः सर्वदा विराजत इत्यत्र न कोऽपि विवादः। 'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति' इति गीतायां स्पष्टमुक्तम्। श्रीराधाकृष्णमहाशयाः एवं प्रतिपादयन्ति सर्वहृदयविराजमानं दिव्यप्रकाशम् ॥

"All men are the children of the Immortal. The spirit is in every one of us as a part of one's self, as a part of the very substratum of one's being. It may be buried in some like a hidden treasure beneath a barren debris of brutality and violance but it is there all the same, operative and alive, ready to come to the surface at the first suitable opportunity. The light which ligheteth every man that comes into the world cannot be put out. Whether we like it or not, whether we know it or not, the Divine is in us and the end of man consists in attaining conscions union with the Divine."

(Occasional Speeches and Writings, p. 256)

"ಮರದೊಳಗಣ ಮಂದಾಗ್ನಿಯ ಉರಿಯದಂತಿರಿಸಿದೆ. ನೊರೆವಾಲೊಳಗೆ ತುಪ್ಪವ ಕಂಪಿಲ್ಲದಂತಿರಿಸಿದೆ. ಶರೀರದೊಳಗಾತ್ಮನ ಕಾಣದಂತಿರಿಸಿದೆ. ನೀ ಬೆರೆಸುವ ಭೇದಕ್ಕೆ ಬೆರಗಾದೆನೈ ರಾಮನಾಥಾ."

एवं वचनशास्त्रे हृदयाकाशे निर्लिप्ततया विराजमानः परमप्रकाशः प्रस्तूयते। शिष्यमस्तके प्रकाशमानं भावलिङ्गं, हृदये विराजमानं प्राणलिंगं, नेत्रे विद्यमानं इष्टलिंगं च आकृष्य गुरुः षड्ध्वशोधिते मन्त्रपूते शिलादिनिर्मिते लिंगे योजयित्वा तल्लिंगं शिष्याय दयया अनुगृह्णाति। अतः लिंगधारणं इष्टप्राणभावलिंगात्मकस्य परमशिवस्य देहे अविरतसंपर्कं कल्पयित्वा, मांसपिण्डं उपासकं मंत्रपिण्डं कृत्वा, तदीयां अशुद्धिं परिहरति। अयमर्थः सम्यगुपपाद्यते वचनशास्त्रे ॥

"ಎನ್ನ ಪ್ರಾಣದೊಳಗಿರ್ದ ಪರಮಕಳೆಯ ತೆಗೆದು ಶಿವಲಿಂಗಮೂರ್ತಿಯ ಮಾಡಿ ಎನ್ನ ಕರಸ್ಥಲಕ್ಕೆ ಕೊಟ್ಟ ನಮ್ಮ ಶ್ರೀಗುರು. ಆ ಲಿಂಗವ ಸರ್ವಾವಸ್ಥೆಯಲ್ಲಿಯೂ ಅಂಗವಬಿಟ್ಟು ಅಗಲಲಾಗದೆಂದು ನಿರೂಪಿಸಿದನಯ್ಯ ಶ್ರೀಗುರು.

ಇದು ಕಾರಣ ಅಂಗವ ಬಿಟ್ಟು ಲಿಂಗವು ನಿಮಿಷಾರ್ಧವಗಲಿದರೆ ನಾಯಕನರಕ ತಪ್ಪ
ದೆಂದು ನಿರೂಪಿಸಿದನಯ್ಯ ಶ್ರೀಗುರು. ಇದುಕಾರಣ ಅಂಗವ ಬಿಟ್ಟು ಲಿಂಗವನಗಲ
ಲಾಗದಯ್ಯ." "ಆಕಾರವಿಡಿದು ಅರ್ಚನೆ ಪೂಜೆಯ ಮಾಡುವುದಲ್ಲದೆ ನಿರಾಕಾರವ
ನಂಬಲಾಗದು. ಶ್ರೀಗುರುಲಿಂಗವು ಪ್ರಾಣಲಿಂಗವನು ಕರಸ್ಥಲಕೆ ಬಿಜಯಂಗೈ
ಸಿಕೊಟ್ಟ ಬಳಿಕ ಬಯಲನರಸಲುಂಟೆ? ಗುರುವು ಮನದಲ್ಲಿ ಮಂತ್ರವನ್ನು, ತನುವಿ
ನಲ್ಲಿ ಲಿಂಗವನ್ನು, ಸ್ಥಾಪಿಸಿ ಕರುಣಾರಸವನೆರೆಯಲು, ಆ ಮಂತ್ರವು ಜಿಹ್ವೆಯಲ್ಲಂಕು
ರಿಸಿ ಶರೀರವನಾವರಿಸಲು, ಆ ಭೂತತತ್ವವಳಿದು ಶರೀರವೇ ಲಿಂಗವಾಯಿತ್ತು.
ಲಿಂಗವು ನೇತ್ರದಲ್ಲಂಕುರಿಸಿ ಮನವನಾವರಿಸಿ ಮನದತಂದ್ರಾದವಕ್ಕೊಳಗಿಸಿ ಆ ಮನವೇ
ಲಿಂಗವಾಯಿತ್ತು. ಮಂತ್ರವೇ ತನುವಾಗಿ ಮನವೇ ಲಿಂಗವಾದಲ್ಲಿ ನಾದಮಧ್ಯದಲ್ಲಿ
ಪುರುಷನಿರ್ಪಂತೆ ಮಂತ್ರಮಧ್ಯದಲ್ಲಿ ಲಿಂಗವಿರ್ಪುದು ಸಹಜವಾಯಿತ್ತು. ತನು-
ಮನೋಮಧ್ಯದಲ್ಲಿರ್ಪ ಪ್ರಾಣಲಿಂಗವು ಮಂತ್ರದಲ್ಲಿ ಲೀನವಾಯಿತ್ತು. ಮಂತ್ರದಲ್ಲಿ
ಜ್ಞಾನವು, ಲಿಂಗದಲ್ಲಿ ಆನಂದವು, ಈ ಎರಡರ ಸಂಗವೇ ನಿಜವು. ನಿಜವೇ ತಾನಾಗಿ,
ತನ್ನಿಂದನ್ಯವೇನೂ ಇಲ್ಲದುದೇ ಕೇವಲ ಕೈವಲ್ಯವೆನಿಸುವುದು."

एवं लिंगधारणम् उपासकस्य पुनर्जन्मोत्पादनेन सर्वांगीणां शुद्धिं संपादयति। वीरशैवसंप्रदायस्य इदमेव वैशिष्ट्यम्। त्रिविधमलयुक्तस्य जीवस्य दीक्षात्रयेण मलदहनद्वारा निर्मलीकरणमेव एतत्संप्रदायरहस्यम्। अयमंशः श्रीराधाकृष्णमहोदयैरेवं सूच्यते—

"The goal of religion is the opening of a new realm of consciousness When this consciousness arises, we see that the individual parts of the universe derive their significance from the central unity of spirit. This renewal of consciousness is the second birth, To have this second birth to be reborn, to be renewed is the goal of the religiou quest" (Ibid p. 197)

एतादृशशक्तिविकास उपासक इष्टलिंगधारणोपासनाभ्यां अनुभवति। अतः सः गुर्वनुगृहीतेष्टलिंगसम्बन्धेन नैर्मल्यावहं जन्मान्तरमेव लभते। अयमाशयः विवरणपूर्वकं उच्यते वचनशास्त्रे॥

"ಅಯ್ಯಾ,- ಎನ್ನ ಹೃದಯದಲ್ಲಿ ನ್ಯಸ್ತವಾಗಿಹ ಪರಮಚಿದ್ಬೆಳಗೇ ಹಸ್ತ
ಮಸ್ತಕಸಂಯೋಗದಿಂದ ಒಂದುಗೂಡಿ ಸಾಕಾರವಾಗಮಾಡಿದಿರಲ್ಲಾ. ಅಯ್ಯಾ, ಎನ್ನ

ಮಸ್ತಕದೊಳಗೊಂದುಗೂಡಿದ ಮಹಾಬೆಳಗ ತಂದು ಭಾವದೊಳಗೆ ಇಂಬಿಟ್ಟಿರಲ್ಲಾ. ಅಯ್ಯಾ, ಎನ್ನ ಮನಸ್ಸಿನೊಳಗೆ ಕೂಡಿದ ಮಹಾಬೆಳಗ ತಂದು ಕಂಗಳೊಳಗಿಂಬಿಟ್ಟಿರಲ್ಲಾ. ಅಯ್ಯಾ, ಎನ್ನ ಕಂಗಳೊಳಗೆ ಕೂಡಿದ ಮಹಾಬೆಳಗ ತಂದು ಕರಸ್ಥಲದೊಳಗೆ ಇಂಬಿಟ್ಟಿರಲ್ಲಾ. ಅಯ್ಯಾ, ಎನ್ನ ಕರಸ್ಥಲದಿ ಥಳಥಳಿಸಿ ಬೆಳಗಿ ಹೊಳೆವುತ್ತಿಪ್ಪ ಅಖಂಡತೇಜವನೆ ಇಷ್ಟಲಿಂಗವೆಂಬ ದೃಷ್ಟವ ತೋರಿ ನಿಶ್ಚಯವ ಶ್ರೋತ್ರದಲ್ಲಿ ಸೃಜಿಸಿದಿರಲ್ಲಾ. ಅಯ್ಯಾ, ಎನ್ನ ಶ್ರೋತ್ರದಲ್ಲಿ ಸೃಜಿಸಿದ ಮಂತ್ರದೊಳಗೆ ನೀವು ನಿಂದು ಮಹತ್ವವ ಹುದುಗಿದಿರಲ್ಲ. ಅಯ್ಯಾ, ಎನ್ನ ಅಂಧ್ಯ ಕೂಡಲಸಂಗಮದೇವ, ಎನ್ನೊಳಗೆ ನಿಮ್ಮಿರವ ಈ ಪರಿಯಲ್ಲಿ ಕಾಣುತ್ತಿರ್ದರಲ್ಲಾ"

एवं देहेन्द्रियादिषु स्वतो विलसन्तं परमात्मप्रकाशं उपासकः स्वयं अनुभूय यथा कृतकृत्यो भवेत् तथा योग्यतां तस्मिन् उत्पादयति षट्स्थलसंप्रदायः। इदं सर्वं लिङ्गधारणस्य माहात्म्यम्। उपासकस्य दैनन्दिनः सर्वोऽपि व्यवहारः लिङ्गव्यवहार एव सञ्जायते। स्वस्मै स्वसुखाय सः न किमपि कर्तुं ईहते। तथा कर्तुं तस्य अवकाशोऽपि नास्ति ॥

ब्रह्मसूत्रेषु च "जीवमुख्यप्राणलिङ्गात्" (1-1-32) इत्यादौ त्रिविधलिङ्गोपासनं भाष्ये समर्थितम्। तत्र जीवपदं इष्टलिङ्गपरम्। मुख्यपदं भावलिङ्गपरम्। तथा च इष्टप्राणभावलिङ्गानां त्रयाणां उपास्यत्वं सिद्धम्। इष्टलिङ्गार्चनं तावत् त्रिविधलिङ्गार्चनमेव, तत्र त्रिविधलिङ्गवस्तुनः उक्तत्वात्। प्रतिष्ठितलिङ्गार्चने तु अन्तर्याम्यार्चनं कथं निर्वर्तितं भवेत्? योऽयं परमात्मा समस्तजगदाधारः भावैकसमधिगम्यः स एव उपासकस्य हृदये अन्तर्यामित्वेन वर्तते। स एव उपासकस्य सर्वेष्टप्रदः इति तदर्चनमेव अवश्यकर्तव्यम् इत्ययमर्थः इष्टप्राणभावात्मकस्य लिङ्गस्य धारणेन बोध्यते। अत एव एतस्सिद्धान्ते प्रतिष्ठितलिङ्गादिपूजा निषिध्यते, तस्य प्रसक्त्यभावात्। समीप एव मधु विन्देत चेत् मानवः, तदर्थं कुतः पर्वतारोहणं कुर्यात् ॥

"ಜ್ಯೋತಿಯ ಬೆಳಗಿನಲ್ಲಿ ಜ್ಯೋತಿಯ ಕಪಟವ ಕಾಂಬಂತೆ, ಕಣ್ಣಿನಿಂದ ಕಣ್ಣಡಿಯ ನೋಡಿ ಕಣ್ಣ ಕಲೆಯ ಕಾಂಬಂತೆ, ತನ್ನಿಂದ ತಾ ನೋಡಿ, ತನ್ನನರಿಯಬೇಕು. ತನ್ನನರಿಯದವ ನಿಮ್ಮನೆತ್ತ ಬಲ್ಲನೋ. ತನ್ನನರಿವುದಕ್ಕೆ ದೃಷ್ಟವ ಕೈಯಲ್ಲಿ ಕೊಟ್ಟ. ಕಾಣದುದಕ್ಕೆ ಚಿತ್ತವ ನೆನಹಿಂಗೆ ಕೊಟ್ಟ. ಚಿತ್ತ ಇಷ್ಟದಲ್ಲಿ ಅಚ್ಚೊತ್ತಿದ. ಮತ್ತೆ

ದೃಷ್ಟವ ಕಾಂಬುದಿನ್ನೇನೊ. ಉರಿಯೊಳಗಣ ಕರ್ಪೂರ, ಅನಲದೊಳಗಣ ಪಾವಕ, ಸಿಲೆಯುಂಡ ಎಣ್ಣೆ—ಅಳತೆಯುಂಟೆ ಅಯ್ಯಾ ? ಅಂಗವ ಮುಟ್ಟದ ಲಿಂಗಕ್ಕೆ ಜಗದ ಹಂಗಿಲ್ಲ, ಅನಂತ ಅತೀತ ನಿಷ್ಕಳಂಕ ಮಲ್ಲಿಕಾರ್ಜುನ ಲಿಂಗವೇ ತಾನಾದ ಶರಣಂಗೆ”

“ಪಂಚತತ್ವದಲ್ಲಿದ್ದು ಪರತತ್ವವನರಿಯಬೇಕು. ಅದಕ್ಕೆ ದೃಷ್ಟ, ಪಶುವಿನ ಹೊಟ್ಟೆಯಲ್ಲಿ ಕರುವಿದ್ದೊಡೆ ಕರೆವುದಕ್ಕೆ ಮನೋಹರವುಂಟೆ, ಅದು ಭಿನ್ನಭಾವವಾಗಿ ಇದಿರಿಟ್ಟು ಉಂಡಲ್ಲದೆ? ಆತೆರನನರಿದಲ್ಲಿ ಅರವುದಕ್ಕೊಂದು ಕುರುಹು ಬೇಕು. ಬಲ್ಲಿದ ವೀರನೆಂದೊಡೆ, ಅಲಗಿನ ಮೊನೆಯಲ್ಲಲ್ಲದೆ ಗೆಲಬಹುದೆ? ಸದಾಶಿವಮೂರ್ತಿ ಲಿಂಗವನರಿವುದಕ್ಕೆ ಇದಿರಿಟ್ಟು ಕಳೆದುಳಿಯಬೇಕು ”

एवं उपासकस्य स्थूलदेहेऽपि इष्टलिङ्गसंबन्धकल्पनया लिङ्गाङ्गसंपर्कः सर्वाङ्गीण सपद्यते। अनेन संपर्केण जीवस्य देहात्मबुद्धिः, देहेन्द्रियव्यवहारश्च स्वयमेव निवर्तते। अयं च लिङ्गाङ्गसबन्धः उपासकस्य शिवभावं प्रतिनिमिषं द्रढयति। अत एव लिङ्गं पतिः, अङ्गभूतो जीवः सती इति सतीपतिभावः स्थिरतया विराजते शिवजीवयोः शरणस्थलपर्यन्तम्। अयमर्थः अस्मिन् वचने विशदीक्रियते॥

“ಸತಿಯ ಸಂಗ ಅತಿಸುಖವೆಂದರಿದಡೇನು, ಗಣಸಾಕ್ಷಿಯಾಗಿ ವಿವಾಹವಾಗದನ್ನಕ್ಕರ? ಕಣ್ಣು ಕಾಂಬುದೆಂದಡೆ ಕತ್ತಲೆಯಲ್ಲಿ ಕಾಂಬುದೆ, ದೀಪವಿಲ್ಲದನ್ನಕ್ಕರ ? ಸೂರ್ಯನ ಪ್ರಕಾಶದಿಂದ ಕಂಡು ತಾವೇ ಕಂಡೆವೆಂಬ ಜಗದ ನಾಣ್ಣುಡಿಯಂತಾಯಿತ್ತು. ಅಂಗವ ಬಿಟ್ಟು ಆತ್ಮನುಂಟೇ? ಶಕ್ತಿಯ ಬಿಟ್ಟು ಶಿವನುಂಟೇ? ಇದು ಕಾರಣ ತನುತ್ರಯವಿರಲು ಇಷ್ಟಪ್ರಾಣಭಾವವೆಂಬ ತ್ರಿವಿಧಲಿಂಗಸಂಬಂಧ ಬೇಡವೆಂದಡೆ ಅಸಂಖ್ಯಾತ ಪ್ರಮಥಗಣಂಗಳೊಪ್ಪುವರೇ? ಇದು ಕಾರಣ ಕೂಡಲ ಚೆನ್ನಸಂಗಯ್ಯನಲ್ಲಿ ಇಷ್ಟಲಿಂಗಸಂಬಂಧವಿಲ್ಲದವರ ಮುಖವ ನೋಡಲಾಗದಯ್ಯ ಪ್ರಭುವೇ” (ಶೂನ್ಯಸಂಪಾದನೆ ಪು 181)

एवं इष्टलिङ्गसंबन्धं प्रशंसन्ते शिवानुभविनः। एतादृशमहावैभवयुतं इष्टलिङ्गं गुरुणा दीक्षाकाले अनुगृह्यते। शिष्ये उत्पन्नं भगवदनुग्रहरूपं शक्तिपातं समालोक्य गुरुः शिष्यं अनुगृह्णाति। शक्तिपातलक्षणं मृगेन्द्रागमे एवं प्रदर्श्यते॥ येषां शरीरिणां शक्तिः पतत्यविनिवृत्तये।

तेषां तल्लिङ्गमौत्सुक्यं मुक्तौ, द्वेषो भवस्थितौ॥

भक्तिश्च शिवभक्तेषु श्रद्धा तच्छासके विधौ॥

इति मुक्तौ औत्सुक्यं, प्रापञ्चिकविषयेषु अनादरः, शिवभक्तेषु हार्दादरः, शिवाचारेषु च श्रद्धा यस्मिन् दृश्यते तस्मिन् शक्तिपातः सञ्जायते। अयमेव भगवदनुग्रह इत्युच्यते। तादृशशक्तिपातवानेव साधकः गुर्वनुग्रहपात्रं संपद्यते। शक्तिपातं समालोक्य गुरुः शिष्यं दीक्षया योजयति॥

दीक्षा च त्रिविधा, वेधा क्रिया मंत्रश्चेति। मस्तके भावलिङ्गं विराजमानं अवतिष्ठते। गुरुः शिष्यमस्तकं स्वहस्तेन स्पृष्ट्वा तत्रस्थं भावलिङ्गं बहिरिष्टलिङ्गे समावेशयति। एवं हृदिस्थं प्राणलिङ्गमप्याकृष्य इष्टलिङ्गे संयोजयति। एवमेव नेत्रयोः प्रकाशमानं इष्टलिङ्गं आन्तरमपि बाह्येष्टलिङ्गे संयोजयति। एवं च इष्टप्राणभावलिङ्गानां सामरस्यं बाह्येष्टलिङ्गे परिकल्प्य स्वान्तर्विराजमानस्य इष्टप्राणभावात्मकस्य चिल्लिंगस्य साक्षात्काराय, तत्रैव मनस्स्थिरीकारणाय च गुरुः शिष्यहस्ते बाह्यं इष्टलिङ्गं प्राणवद्धारणीयं इत्यदिश्य, मन्त्रस्मरणपूर्वकं अनुगृह्णाति। अत एव गुरुः साक्षात् शिव एवेति भाव्यते। श्रीराधाकृष्ण महाशयाः गुरुशब्दार्थं एवं निर्वचन्ति—

"The very name Guru means the remover of ignorance. 'Gu' is andhakāra or ignorance. 'Ru' is the remover of darkness. The remover of darkness is Guru." (Occasional Speeches and Writings Page 240)

एवं इष्टप्राणभावलिङ्गानां सामरस्यं गुरुः प्रकाशयति शिष्यहस्ते यदा च एतादृशं सामरस्यं सिध्यति तदैव तस्मिन् जीवे जीवत्वनिवृत्तिपूर्वकं शिवत्वं प्राप्तमेव। तदाविर्भावार्थमेव उत्तरस्थलानि प्रवृत्तानि। ताम्रस्य ताम्रत्वनिवृत्तिपूर्वकस्वर्णत्वप्राप्तिः रसवेधावशात् संभवति। एवं जीवस्य जीवत्वनिवृत्तिपूर्वकशिवप्राप्तिहेतुत्वात् हस्तमस्तकसंयोगारूपायाः दीक्षायाः वेधादीक्षेति नाम सञ्जातम्। दीक्षाङ्गभूता कुण्डमण्डलादिरूपा क्रिया क्रियादीक्षेत्युच्यते। पञ्चाक्षरीमन्त्रोपदेशः मन्त्रदीक्षेत्युच्यते। एतत् दीक्षात्रयं मिळित्वैव शिवज्ञानप्रदानात् मलक्षपणाच्च दीक्षात्वेन व्यवह्रियते॥

## पञ्चमोऽध्यायः
## सहकारिसाधनानि

एतावता एतत्संप्रदाये प्रधानभूतः 'पट्स्थलोपासनक्रमः सुविशदं निरूपितः। अतः परं तदङ्गभूताष्टावरणपञ्चाचाराः निरूप्यन्ते, यतः एत-त्संप्रदाये षट्स्थलोपासनावसरे अष्टावरणपञ्चाचारनिष्ठापि आवश्यकी। शिवो-पासननिरतस्य भक्तस्य संरक्षकत्वात् अष्ट आवरणानि 'कवचानि' इत्युच्यन्ते। 'श्रेयांसि बहुविघ्नानि' इति न्यायेन भक्तेः विच्छेदादिप्रसक्त्या तदाचरण-वेलाया निष्ठासिध्द्यर्थं अवश्यापेक्षितानि कवचस्थानापन्नानि एतानि। तथोक्तं चन्द्रज्ञानागमे—इमानि शिवभक्ताना मवशेषततेः सदा।

निवारणैककार्याणि ख्यातान्यावरणाख्यया ॥ इति ॥

तानि च आवरणानि गुरुः, लिङ्गं, जङ्गमः, पादोदकं, प्रसादः भस्म रुद्राक्षः मन्त्रः इति अष्टधा विद्यन्ते।

### गुरुस्वरूपम्

तत्र गुरोर्लक्षणं एवमुक्तम् सिद्धान्त शेखामणौ।

गुणातीतं गुवर्णं च रूपातीतं रुवर्णकम्।
गुणातीतं अरूपं च यो दद्यात् स गुरुः स्मृतः ॥ (15–8)

एवं च परमात्मज्ञापको गुरु भक्तदृष्ट्या साक्षात् परमात्मैव इत्युक्तं भवति। सः त्रिविधः दीक्षागुरुः, शिक्षागुरुः, ज्ञानगुरुश्चेति। तथाच लिङ्ग-धारणसंस्कारो दीक्षया सञ्जायते। "दीयते परमं ज्ञानं क्षीयते पापबन्धनम्। यया दीक्षेति सा॥" इति मोक्षहेतुभूतः संस्कारः दीक्षाशब्देनोच्यते। एतादृशीं शिवदीक्षां यो ददाति सः दीक्षागुरुः। यस्तु परमार्थतत्त्वं उपदिशति, कर्तव्याकर्तव्यं च शिक्षयति सः शिक्षागुरुः। यस्तु उपदेशगृहीते अर्थे संशयं परिहार्य समीचीनं ज्ञानं ददाति सः ज्ञानगुरुः। एक एव वा त्रिविधगुरुर्भवि-तुमर्हति। एवं गुरुविषये अत्यन्तनिष्ठा वीरशैवसंप्रदाये अवश्योपादेया॥

अयं च संप्रदायः, परमशिवपञ्चमुखोद्भूतान् पञ्चाचार्यान् रेणुकमरुळसिद्धैकोरामपण्डिताराध्यविश्वाराध्यान् गुरूनिति मनुते। एते च पञ्चाचार्याः सर्वैः वीरशैवैः विवाहादिसमस्तशुभकर्मसु तदानीन्तनात्कालादारभ्य अद्यापि पञ्चकलशस्थापनपूर्वकं श्रद्धया समभ्यर्च्यन्ते। जगति शिवधर्मस्थिरीकरणार्थं एते प्रतियुगं अवतरन्तीति संप्रदायो मनुते। एत एव शिवागमानुरोधेन वीरशैवसिद्धान्ततत्त्वं प्रथमं बोधयामासुः। एतैराचार्यैः स्थापितेषु मठेषु तत्पीठस्थाः स्वामिनः उपदेशादिकं गुरुकार्यं निर्वहन्तः भक्तान् दीक्षया अनुगृह्णन्तोऽद्यापि विराजन्ते। गुरुपीठमधिरोहन्तः सर्वेऽपि सामान्यतः मूलगुरुनाम्नैव व्यवह्रियन्ते। यथा शङ्कराचार्यपीठमधिरूढाः स्वामिनः शङ्कराचार्यनाम्नैव आहूयन्ते तथा रेणुकाद्याचार्यपरंपरागता अपि स्वामिनः तत्तन्नामभिरेव व्यवह्रियन्ते। यथा च रेणुकाचार्येण पूर्णसिद्धत्वात् रेवणसिद्धापरनामधेयेन प्राक्तने काले द्राविडसंस्कृतिमूलभूताय अगस्त्यमुनये शिवतत्त्वोपदेशः, अनंतरं रामायणकाले तेनैव नाम्ना अवतीर्य भक्तविभीषणस्य अभ्यर्थनानुसारेण लङ्कायां कोटित्रयशिवलिंगस्थापनं, ततोप्यर्वाचीनकाले तेनैवाचार्येण शङ्कराचार्याय चन्द्रमौलीश्वरलिङ्गप्रदानमिति च रेणुकाचार्यलीला प्राधान्यतया प्रत्येकं प्रतियुगं सन्दृश्यते। अयमेव रेणुकः कि.श द्वादशाब्देऽपि रेवणसिद्धनाम्ना पुनरवतीर्य बसवादिभिः शरणैः सह वसन् भक्तानुग्रहलीला निरवहत्। अयमपि मूलरेणुकाचार्यपीठमारूढः गुरुस्थानीय एव। नामसाजात्यमात्रेण अयमेव मूलरेणुकाचार्य इति भ्रान्त्या रेणुकपीठमेवार्वाचीनं मन्यन्ते केचन। तत्तु अगस्त्यादिभ्यो रेणुकाचार्यैः तत्त्वोपदेशस्य सर्वसंप्रतिपन्नत्वेन न समञ्जसम्। इतराचार्यपीठवदयमपि पीठः रंभापुर्यां स्थापितः अनादेः कालादारभ्यैव भूमण्डलमलङ्कुर्वन् विराजते। एतत्परंपरा शाखोपशाखतया बहुधा वर्धिता सुत्तूरु इत्यादिक्षेत्रेषु प्रत्येकमद्य विराजमानापि सर्वेषामेषां रंभापुरीपीठ एव मूलाचार्यस्थापितः पीठ इति संप्रदायविदो वदन्ति। तथैव श्रीशैलक्षेत्रे पण्डिताराध्यस्थापितः मूलपीठो विराजते।

तस्यापि बहवः शाखामठाः तत्परंपरागतस्वामिभिः 'निडुमामिडि' इत्यादि क्षेत्रेषु स्थापिताः लोककल्याणं निर्वर्तयन्ति । तथैव उज्जैन्यां मरुळाराध्यस्थापितः दारुकपीठः शोभते । तत्पीठस्थस्वाम्यनुग्रहानुसारेण 'सिरिगेरे' इत्यादिक्षेत्रेषु तच्छाखामठस्थापनेऽपि उज्जैनीपीठ एव मूलाचार्यस्थापित इति संप्रदायविदोऽभिप्रयन्ति । तथैव हिमवत्केदारक्षेत्रे एकोरामाराध्यस्थापितः, वाराणस्यां विश्वाराध्यस्थापितश्च पीठः तत्तत्स्वाम्यधिष्ठितः विराजते । गोत्रपुरुषत्वेन अभ्युपगता एते पञ्चाचार्याः सर्वैः वीरशैवैः गुरुस्थाने मान्यन्ते ॥

तत्तच्छाखापीठीया एव स्वामिनः अद्यापि भक्तशुद्धीकरणसंस्काररूपाणि सर्वाणि कर्माणि निर्वहन्तो भक्तान् पावयन्तश्च सर्वेष्वपि ग्रामेषु वर्तन्ते ।

गुरुवैशिष्ट्यमस्मिन् संप्रदाये एवं निरूप्यते । गुरुः शिवैकनिष्ठोऽपि परमशिवस्य दिव्यमूर्तिस्थितिं लीलावस्थां च तत्प्रतिनिधिभूतो निर्वहति । जीवस्य मलनिवृत्त्या, भक्त्युत्पादनेन, बहिरन्तश्च लिंगसम्बन्धपरिकल्पनेन च गुरुः साक्षात् परमशिवभावनयैव सम्मान्यते । तादृशो गुरु अधिगतशिवतत्त्वोऽपि शिष्यैः सह कृपया वसन् तदीयलोपदोषादिकं सर्वं यथावसरं यथोचितं च परिमार्जयति । साक्षात्कृतधर्मा हि गुरुः । सम्यगनुभूतशिवतत्त्वो ह्ययं स्वयं निरञ्जनोऽपि, उदासीनवदासीनः भक्तानुकम्पया उपदेशादिकं करोति । तथैव साधकस्य योग्यतामवलोक्य तदन्तर्हितलिंगस्वरूपं उपदिश्य तस्मै दिव्यं जन्मान्तरं च अनुगृह्णाति । अत एवाष्टावरणेषु गुरोः प्राथम्यं परिकल्पितम् । जङ्गमस्य स्थानं त्वनुपदमेव निरूप्यते ॥

## लिङ्गस्वरूपम्

लिङ्गस्वरूपं तु पूर्वमेव निवेदितम् । परं त्वत्र लिङ्गपदेन एतन्मतासाधारणं इष्टप्राणभावात्मकं सदा देहे धार्यमाणं साधकस्य प्रियतमं इष्टलिङ्गं विवक्षितम् । तादृशे लिङ्गे निष्ठा, प्राणसमभावना च अत्यावश्यकी ॥

## जङ्गमलक्षणम्

जङ्गमलक्षणं त्वेवमुक्तम् सिद्धान्तशिखामणौ ॥

जानन्त्यतिशयात् ये तु शिवं विश्वप्रकाशकम् ।

स्वस्वरूपतया ते तु जङ्गमा इति कीर्तिताः ॥ (11–36)

अत्र 'अतिशयात् जानन्ति' इति शब्दप्रयोगात् जङ्गमाः जीवन्मुक्ता इत्यर्थः सूच्यते। तेन च तेषु जीवत्वनिवृत्तिपूर्वकशिवत्वाविर्भावसामर्थ्यं कथितं भवति। वीरशैवसंप्रदाये गुरुलिङ्गजङ्गमाः शिवभावनया समानतया मान्यतमाः। शिव एव भक्तानुग्रहार्थं गुरुलिङ्गजङ्गमात्मना अवतिष्ठत इति वीरशैवानां विश्वासः। तथोक्तं सिद्धान्तशिखामणौ—

एक एव शिवः साक्षात् सर्वानुग्रहकारकः।

गुरुजङ्गमलिङ्गात्मा वर्तते भुक्तिमुक्तिदः ॥ इति 9-59)

तत्र गुरुः दीक्षां दत्वा तत्त्वमुपदिश्य ज्ञानचक्षुः उन्मीलयतीति सदा पूज्यः। अत्र च भुवि सर्वेषामपि परमगुरुः परमात्मैव। स एव गुरुरूपी सन् संसारमग्नानुद्धरति। संसारोद्धारकत्वं च परमशिवादन्यस्य कथं वा संभवेत्? 'संसारमोक्षस्थितिबन्धहेतुः' इति खलु श्रुतिः वदति। अतः संसारमोचको गुरुः परमशिव एवेत्यत्र न संशयावकाशः। गुरुर्हि वेधादीक्षया जीवे जीवत्वं निवर्त्य शिवत्वं विकासयतीति पूर्वमेवोक्तम्। क्रियादीक्षाया शिलानिर्मितस्य लिङ्गस्य शुद्ध्यै संस्कारमनुतिष्ठन्, सः शिष्यदेहस्थेष्टप्राणभावकलां लिङ्गे संयोज्य तल्लिङ्गं तस्मै अनुगृह्णाति। मन्त्रदीक्षायां सप्रणवपञ्चाक्षरीमहामन्त्रोपदेशं निरञ्जनस्थितिप्रतिनिधिभूतेन जङ्गमेन निर्वर्तयति ॥

एवं भक्तस्य प्रधानसंस्काररूपाया दीक्षायां गुरुजङ्गमयोरुभयोरपि मेळनस्यावश्यकत्वादष्टावरणेषु गुरुजङ्गमयोरुभयोरपि निर्देशः कृतः। अनयोरन्यतरलोपेऽपि दीक्षा न संपूर्णा भवेत् ॥

गुरुजङ्गमयोरुभयोरपि परमशिवावताररूपत्वेन दीक्षात्रयप्रदानाय प्रत्येकं शक्तत्वेऽपि परमशिवमूर्तामूर्तप्रतिनिधित्वेन प्रत्येकं तौ कार्यद्वयं निर्वोढुं न

प्रभवत एव । न हि मूर्तावस्थाकार्यं अमूर्तावस्थायां, अमूर्तावस्थाकार्यं मूर्तावस्थायां वा परमशिवः शक्तोऽपि प्रकटयति । लोकेऽपि च त्रिचतुरशास्त्रप्रवीणोऽपि यादृशशास्त्राध्यापनादौ यो नियुक्तो वर्तते तस्मिन्नेकस्मिन्नेव सः विद्वान् स्वकृत्यं निर्वोढुं प्रभवति, नान्यस्मिन्निति दृश्यत एव । एवमत्राप्युभयोरपि उभयविधशक्तिविशिष्टत्वेऽपि गुरौ निरञ्जनावस्थायाः, जङ्गमे लीलावस्थायाश्चान्तर्हितत्वेन उभयविधकार्यमपि प्रत्येकमेतौ निर्वोढुं न प्रभवत एव । एवं गुरुजङ्गमयोरेकत्रावस्थानेन दीक्षानिर्वहणरूपं सामरस्यमेव भक्तोद्धरणाय प्रभवेदित्ययमंशः एतत्सिद्धान्तसारभूतोऽभिनन्दनीयश्च । इदं च सामरस्यमस्मिन् संप्रदाये अनादेरेव कालात् आचर्यमाणं वर्तते । अगस्त्याय रेणुकाचार्येण कृते शिवतत्त्वोपदेशेऽपि इदं सामरस्यं आसीदेव ॥

> एक एव शिवः साक्षात् सर्वानुग्रहकारकः ।
> गुरुर्जंगमलिंगात्मा वर्तते भुक्तिमुक्तिदः ॥

इत्यादिसिद्धान्तशिखामणिवाक्ये गुरुजङ्गमयोः मूर्तिभेदेऽप्यैक्यं स्पष्टम् ॥

तत्कालादारभ्य अद्यपर्यन्तं गुरुजंगमाभ्यां मिलित्वैव दीक्षा निर्वर्त्यमाना वर्तते । अतः अनयोरन्तरकल्पनादीनां प्रसक्तिर्दूरगतास्ता । उभयोरपि समताभावनया पूजनमन्तरा शिष्यस्य संपूर्णः परमशिवानुग्रहोऽपि दुष्प्राप एव । परमशिवः मूर्तामूर्तोभयावस्थ इत्यमकृदुक्तम् । ते च मूर्तावस्था लीलावस्थेत्युच्येते । दिव्यमूर्तिपरिग्रहमन्तरा कथं वा लीलां निर्वर्तयेत् परमशिवः । अतः सा लीलावस्था ॥

अमूर्तावस्था तु केवलावस्थेत्युच्यते । यतस्तदवस्थायां 'यदा तमस्तन्न दिवा न रात्रिः न सन्न चासच्छिव एव केवलः' इत्युक्तरीत्या निरञ्जनः परमशिवः स्वस्थावस्थास्थितो भवति, अतः सा केवलावस्थेत्युच्यते ॥

उक्तोभयरूपः परमशिवः लोके भक्तानुग्रहायावतरन् गुरुरूपेण मूर्तावस्थां प्रकटयन् लीलारसमनुभवति । एवं स एव जङ्गमरूपेणावतरन् स्वस्य निरञ्जनस्वरूपं प्रकटयन् केवलावस्थारसमनुभवति ॥

यद्यपि गुरुजंगमयोरुभयोरपि परमशिवावताररूपत्वेन, उभयोरपि उभयरूपत्वं (मूर्तामूर्तोभयरूपत्वं) परमशिववदेव वर्तत एव; अथापि मूर्तावस्थाप्रतिनिधिभूते गुरौ निरञ्जनस्थितिरन्तर्हिता सती भक्तोद्धरणलीलानिर्वर्तनसामर्थ्यं प्रददाति। न हि निरञ्जनावस्थायां परमशिवः लीलां निर्वर्तयति ॥

एवं जंगमे लीलावस्थाऽन्तर्हिता वर्तते। जंगमो हि केवलावस्थाप्रतिनिधिभूतः। न हि परमशिवः केवलावस्थायां लीलां निर्वर्तयतीत्युक्तमेव। अतः तस्मिन् लीलावस्था अन्तर्हिता वर्तते। तथा च जङ्गमः निरञ्जनत्वात्, निर्लिप्तत्वाच्च स्वयं बाह्योपदेशादिकमकुर्वन् स्वात्मशक्त्यैव दर्शनमात्रेण भक्तानां भक्तिं अभिवर्धयन् तानुद्धरति ॥

एवमनयोरुभयोः मूर्तामूर्तपरमशिवप्रतिनिधिरूपत्वात्, उभयोर्मेलन एव भक्ते परमशिवसान्निध्यमपि संपूर्णं भवति। विनान्यतरतिरस्कारं उभयोः पूजनमेव संपूर्णपरमशिवपूजनं च भवतीति षट्स्थलसंप्रदाय उद्घोषयति। अयं च घण्टाघोषः श्रेयःकांक्षिभिः सर्वैः भक्तैः सम्यङ्मन्तव्यः। अनया समन्वयदृष्ट्या मानवाः समाहितचेतसः समदर्शनाश्च भूत्वा परस्परं प्रीणयन्तः लोककल्याणं साधयितुं प्रभवन्ति ॥

गुरुजंगमयोः स्वरूपपरिज्ञानं यथा भक्तस्यावश्यकम्, तथा लिंगजंगमयोः स्वरूपपरिज्ञानमपि तस्यावश्यकमेव। तत्र इष्टलिंगं तु परमात्मास्वरूपमेवेत्यत्र न विवादः। तच्च लिंगं द्विविधं जंगमाजंगमभेदात्। इष्टलिंगं अजंगमलिंगम्, तस्य स्वतः चलानाद्यभावात्। जंगमलिंगं तु तत उत्कृष्टमेव। तथोक्तं सिद्धान्तशिखामणौ—

लिंगं च द्विविधं प्रोक्तं जंगमाजंगमात्मना।
अजङ्गमे यथा भक्तिः जङ्गमे च तथा स्मृता ॥ (9-60)
अजंगमं तु यल्लिंगं मृच्छिलादिविनिर्मितम्।
तद्वरं जंगमं लिंगं शिवयोगीति विश्रुतम् ॥ (9-61)
अचरे मन्त्रसंस्कारात् लिंगे वसति शङ्करः।
सदा काले वसत्येव चरलिंगे महेश्वरः ॥

इति लिङ्गापेक्षया जंगमस्य उत्कृष्टता सम्यगुपपादिता।

जंगमस्वरूपं एवं उपवर्ण्यते वचनशास्त्रे—" ಅಯ್ಯಾ ಜಂಗಮವೆಂದಡೆ ಬಾಯಿಲಿಕ್ಕವೇ, ಜಂಗಮವೆಂದಡೆ ಉಪಾಧಿಕನೇ, ಜಂಗಮವೆಂದಡೇನು ಸ್ತ್ರೀಲಂಪಟನೇ, ಈ ಗುಣವುಳ್ಳವನ ಚರಜಂಗಮವೆಂಬನೇ, ಎನ್ನನು. ಈ ಪಾತಕದ ನುಡಿಯ ಕೇಳಲಾಗದು. ಜಂಗಮವೆಂತವನೆಂದೊಡೆ, ನಿರ್ಲೇಪ, ನಿರುಪಾಧಿಕ, ನಿರ್ಬೋಧ, ನಿರಾಶ್ರಿತ, ನಿಸ್ಮರಣ, ನಿರ್ಲಂಪಟ ಜಂಗಮ ಈ ಷಡ್ಗುಣ ಭರಿತನಾದೊಡೆ ಜಂಗಮವೆಂಬೆನಯ್ಯ. ಇಂತಿಪ್ಪುದೇಕಾರಣವಾಗಿ. ಪ್ರಭುದೇವರೇ ಶರಣೆಂದು ಬದುಕನೇ ಬಸವಣ್ಣ? ಇವರಿಬ್ಬರು ಒಕ್ಕುದ ಕಂಡು ನಾನು ಬದುಕಿದೆನು ಕಾಣಾ. ಇಂತು ಪ್ರಮಥಗಣಮಾರ್ಗದಲ್ಲಿ ದೃಢಚಿತ್ತದಿಂದ ನಿಂದ ಮಹಂತಶರಣಂಗೆ ನಾನು ನೀನು, ಗುರು ಶಿಷ್ಯ, ಭಕ್ತ ಜಂಗಮ, ಸತಿ ಪತಿ, ತಂದೆ ಮಗನೆಂಬ ಉಭಯ ಶಬ್ದವುಂಟೆ ನೋಡಾ, ಸಂಗನ ಬಸವೇಶ್ವರಾ ?" समग्र व. वचन p-29-30)

जङ्गमस्यैतादृशं महत्त्वं यतो मायाप्राबल्येन कालक्रमेण अवनतं आसीत् ततश्च परमशिव एव क्रि. श. द्वादशाब्दे अल्लमार्यनाम्ना कर्णाटके अवतीर्य निरञ्जनजङ्गमस्य दिव्यं आदर्शं भक्तेभ्यः प्रदर्शयामास। स च अल्लमप्रभुः स्वीयागमनमेव निरीक्षमाणेन अनिमिषार्येण लब्धेष्टलिङ्गः कृतानुग्रहश्च शिवयोगपरीपूर्णः निरञ्जनस्थितौ कर्णाटके सर्वत्र सञ्चार्य तदानीन्तनेषु साधकेषु जागृतिं उत्पादयामास ॥

आचार्याः निरञ्जनमूर्तिसान्निध्येनेव दीक्षां निर्वहन्त आसन्निति पूर्वमुक्तम्। परन्तु निरञ्जनमूर्तयः ईश्वरकेवलावस्थाप्रतीकरूपत्वेन अस्मारामाः सामूहिककार्यमनिर्वर्तयन्त आसन्। बसवार्यस्तु तादात्विकपरिस्थित्यानुसारेण धर्मपरिपोषणाय निरञ्जनसंप्रदायं पीठरूपतया परिकल्प्य तत्र अल्लमप्रभुं स्थापयामास। अतश्च निरञ्जनसंप्रदायः जङ्गमपरंपरा च बसवार्यकालात्प्राक् नासीदिति न भ्रमितव्यम्।

एवं निरञ्जनपीठं अल्लमप्रभुः अधिष्ठाय 'तादृशी स्थितिर्लोके कथमनुष्ठेया' इत्यादर्शं स्वीयजीवननिदर्शनेन सर्वेषां मनसि स्थिरयामास। तेन स्थिरीकृतं निरञ्जनाख्यं केवलं शून्यपीठमारूढाः जङ्गमाः 'विरक्ता' इति परिगणिताः। एतादृशशून्यस्थितौ निर्लिप्ततया वसतां एषां विरक्तानां परंपरा परमशिवस्य केवलावस्थां प्रतिनिधीकुर्वन्ती चित्रदुर्गक्षेत्रे मुरुघराजेन्द्रमठे

अद्यापि विराजते । अयं च निरञ्जनपीठः शाखोपशाखतया प्रवर्ध्य 'एडेयूर' इत्यादिषु अनेकेषु दिव्यक्षेत्रेषु समधिगतव्याप्तिः लोकव्यावहारनिरतेभ्यो भक्तवृन्देभ्यः निरञ्जनजङ्गमस्थितेरादर्शं प्रकटयन् विराजते । यथा गुरुमठे गुरुणा सह जङ्गमोऽपि प्राक्तनादपि कालात् निवसन् पारमेश्वरीं कैवल्यस्थितिं प्रकटयति तथा विरक्तमठेऽपि कैवल्यस्थितिं निदर्शयता जङ्गमेन सह कश्चन आचार्यपीठीयोऽपि गुरुः निवसन् भक्तानुग्रहलीलां निर्वर्तयति ॥

परमात्मनः उपास्योपासकभावलीला गुरुलिङ्गजङ्गमैर्निर्वर्त्यते । तत्र गुरुः उपासकहृदयस्थितं लिङ्गं तस्मै प्रदर्श्य तत्प्रतीकरूपं इष्टलिङ्गं अनुगृह्णाति । जङ्गमस्तु उपासके लिङ्गनिष्ठां पोषयति । ततश्च उपासकात्मप्रतीकभूतादिष्टलिङ्गात् गुरुजङ्गमावुत्कृष्टौ भवतः । न तावन्मात्रं—परोक्षस्य परमशिवस्य साक्षादेवोपासकोद्धरणासंभवात् गुरुजङ्गमात्मनैवावतीर्यो द्धरणात् उपासकदृष्ट्या परोक्षात्परमशिवादपि अपरोक्षौ गुरुजङ्गमावुत्कृष्टौ भाव्येते । उपासकेष्टलिङ्गापेक्षया तयोरुत्कर्षेऽपि, तयोरपि परमशिवनिष्ठत्वेन परमशिवादप्युत्कृष्टत्वं तु न संभवत्येव । केचित्तु भक्ताः भक्त्यतिशयात् परोक्षात्परमशिवादपि प्रत्यक्षौ गुरुजङ्गमावेवोत्कृष्टौ भावयन्ति । भगवानपि 'ज्ञानी त्वात्मैव मे मतम्' इति स्वभक्तं स्वापेक्षयाप्युत्कृष्टमेव कथयति । अतश्च परमात्मापेक्षया तन्निष्ठौ गुरुजङ्गमावुत्कृष्टाविति तेषामाशयः ॥

एवं विवादे इदमत्रावधेयम् । भक्तिसिद्धान्ते भगवदपेक्षयापि भक्ताः अधिका इत्यत्र न विवादलेशः । भगवान् हि न सुगम्यः सर्वसेव्यः, सर्वानुग्राहको वा । भक्तास्तु सुगम्याः सर्वसेव्याः सर्वानुग्राहकाश्च । अतस्ते उत्कृष्टा भाव्यन्ते ॥

परं तु भक्तस्य एतादृशं महत्त्वं कथमागतम् । परमात्मभक्तत्वादेव खलु तदिति स्पष्टम् । अतः कथमयं परमात्मापेक्षयापि उत्कृष्टः स्यात् ! यद्भक्तत्वात् अस्य महत्त्वं, सः कथं ततोऽपि न्यूनः स्यात् । अतः भक्तभगवतोः आधिक्यन्यूनभावः भावमात्रनिबन्धन एव । कतिपयांशैः

भगवानतिशेते । कतिपयांशैस्तु भक्तः अतिशेते । भगवतः अतीन्द्रियत्वेन, सर्वैः साक्षात्कर्तुं अशक्यत्वेन, भक्ताः तदपेक्षया अधिकाः इत्येतावन्मात्रं ग्राह्यम् । एवं भक्तभगवतोः असङ्कीर्णस्वरूपस्वभावपरिज्ञानाभावात् उच्चावचाः बहवो व्यवहाराः पामरेषु प्रवृत्ताः । उपासकापेक्षया भक्तः उत्कृष्टः । अतीन्द्रियात् भगवतोऽपि ऐन्द्रियिकः भक्तः पूज्यतमः । स तु भक्तः परमात्मानमेव स्वापेक्षयापि उत्कृष्टं मन्यत एव, न तु आत्मानं परमात्मनोऽपि उत्कृष्टं मन्येत सः । अहङ्काराभिमानरहित एव भक्तः । एवं तत्त्वपरिशीलनया उत्कृष्टत्वनिकृष्टत्वे असङ्कीर्णे निणतव्ये । एवं च गुरुजङ्गमयोः परमात्मभक्तत्वेऽपि उपासकस्य स्वोद्धरणात्—परमात्मवत् तौ पूज्यौ भवतः ॥

## पादोदकम्

प्रकृतिसंबद्धं इदं शरीरं जीवस्य स्वभावतः बन्धकम्, यतः तत्सबन्धाद्दाकृष्टो जीवः अकृत्यानि करोति । अतः प्रथम शरीरशुद्धिः संपादनीया । शरीरे शुद्धे सति भावोऽपि शुध्यति । अतः शरीरशुद्धिद्वारा भक्तिसवर्धकानि लिङ्गस्य गुरुजङ्गमयोश्च पादोदकानि वीरशैवैरवश्योपादेयानि । गुरुलिङ्गजङ्गमानां ऐक्ये सिद्धे, लिङ्गाभिषिक्तं जलं यथा परमपावनं तथा गुरोः जङ्गमस्य च पादोदकं परमपवित्रमेव ।

तथोक्तम्— पादोदकं यथा भक्त्या स्वीकरोति महेशितुः ।
तथा शिवात्मनोर्नित्यं गुरुजङ्गमयोरपि ॥ (सि. शि. 9–67)

एवं शिवस्वरूपयोः गुरुजङ्गमयोः पादोदकं भक्त्या स्वीकृतं मलदोषनिवृत्त्या ज्ञानवर्धनेन च भक्तं पावयति ॥

## प्रसादः

प्रसाद इत्यस्य प्रसन्नता अर्थः । 'प्रसादस्तु प्रसन्नता' इति अमरकोशाल्लभ्यते । कृत्याकरणे न अकृत्यकरणेन च संसारिषु शिवः क्रुद्धो भवति ।

क्रोधश्च मनःकालुष्यमेव। राज्ञां अपराधिषु क्रोधो गुण एव न तु दोषः। प्रत्युत अपराधिषु अनपराधिषु उभयत्रापि साम्यमेव दोषो राज्ञाम्। अतः भगवतः कथं क्रोध इति नाशङ्कनीयम्। रामायणे हि रामगुणवर्णनप्रकरणे "कालाग्निसदृशः क्रोधे क्षमया पृथिवीसमः" इति उभावपि क्रोधक्षमौ गुणत्वेन वर्णितौ। एवं क्रुद्धो भगवान् मुमुक्षुषु जीवेषु तादृशं क्रोधं परित्यजति। ततश्च मनः कालुष्यं त्यक्त्वा प्रसन्नं भवति। तथा च प्रसादो नाम भगवदनुग्रह इति पर्यवसितम्। लोकेऽप्यत एव प्रसादशब्दः अनुग्रहरूपार्थे प्रयुज्यते। स्वेन उपभुज्यमानं सर्वं परमात्मशेषभूतम्। तद्दत्तं तदनुग्रहलब्धमिति बुद्ध्या सर्वं परमात्मने समर्प्य तद्दत्तं अनुग्रहरूपं प्रसादं उपभुञ्जीत भक्तः। गुरुलिङ्गजङ्गमानां ऐक्यात् त्रिभ्योऽपि स्वसन्निहितं भोज्यं वस्तुजातं समर्प्य भक्तः तदुपभुक्तशेषमेव भुञ्जीत। ईशावास्यश्रुतिः इममाशयं विविच्य उपदिशति। "ईशावास्यमिदं सर्वं यत्किञ्च जगत्यां जगत्। तेन त्यक्तेन भुञ्जीथाः मा गृधः कस्य स्वित् धनम्" इति। इयं श्रुतिः "देहे विद्यमानाय इष्टप्राणभावरूपाय परमशिवाय भक्तः रूपरुचितृप्तिरूपान् पदार्थान् भक्त्या निरभिमानेन च समर्प्य तच्छेषप्रसादभोगेन सुखं वसेत्, इष्टलिङ्गार्पितं विहाय अन्यदेवार्पितं न कदापि भुञ्जीयात्, तत्र आशां मा कुर्यात्" इत्याद्यर्थं अभिव्यनक्ति॥

"भुञ्जीत रुद्रभुक्तान्नं, रुद्रपीतं जलं पिबेत्। रुद्राघ्रातं सदा जिघ्रेत्"

इति जाबालिकी श्रुतिः प्रसादभावनयैव इन्द्रियसुखानुभवं नियमयति।

"अर्पयित्वा निजे लिङ्गे पत्रं पुष्पं फलं जलम्।
अन्नाद्यं सर्वभोज्यं च स्वीकुर्याद्भक्तिमान्नरः॥

शिवलिंगप्रसादस्य स्वीकारात् यत्फलं भवेत्"। इत्यादिना सिद्धान्त शिखामणावपि प्रसादस्वीकारः स्पष्टमभिहितः।

यत्करोषि यदश्नासि यज्जुहोषि ददासि यत्।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम्॥

इति गीता अर्जुनं निमित्तीकृत्य सर्वान् भक्तान् तदन्तर्वर्तिने परमशिवाय सर्वाणीन्द्रियसुखानि भक्त्या समर्पयितुं आज्ञापयति। एवं समर्प्य प्रसादभोगेन साधके निरभिमानता, भावशुद्धिः, भक्तिश्च सुप्रतिष्ठिता भवति॥

## भस्म

" विभूतिर्भसितं भस्म क्षारं रक्षेति भस्मनः।
एतानि पञ्च नामानि हेतुभिः पञ्चभिर्भृशम्॥(7–3)
विभूतिर्भूतिहेतुत्वात् भसितं तत्त्वभासनात्।
पापानां भर्त्सनात् भस्म क्षारणात् क्षारमापदाम्॥ (7–4)
रक्षणात् सर्वभूतेभ्यः रक्षेति परिगीयते।" इति सिद्धान्तशिखामणौ

भस्मनः सहेतुकानि विभूत्यादीनि नामानि उपपादितानि। तन्निष्पादनक्रमः तद्धारणप्रकारादिकं च तत्र विशदं अभिहितम्। एवं च सर्वारिष्टशान्त्यर्थं भक्तिस्थिरीकरणाय च सद्भक्तैः भस्म सदा धार्यमेव। अहङ्काराभिमानदहनसूचकं दुष्प्रवृत्तिनिवर्तकं चेति भस्ममाहात्म्यं संप्रदायः प्रशंसति॥

## रुद्राक्षम्

त्रिपुरसंहारकाले रुद्रनेत्रात्पतिताः अश्रुबिन्दवः वृक्षरूपेण भुवि प्ररूढाः तत्फलरूपं एतदाकारं अभजन्निति सिद्धान्तशिखामणौ अभिहितम्। रुद्रनेत्रसमुत्पन्नत्वात् अस्य फलस्य रुद्राक्षमिति नाम सञ्जातम्। एतादृशस्य शिवांगसंभूतस्य रुद्राक्षस्य धारणात् भावशुद्धिः, शिवाभिमर्शश्च संजायते॥

## मन्त्रः

एवं पादोदकप्रसादसेवनेन विभूतिरुद्राक्षधारणादिना च विशुद्धदेहः विशुद्धान्तःकरणश्च वीरशैवः सर्वारिष्टनाशकं सर्वेष्टार्थप्रदं शिवपञ्चाक्षरीमहामन्त्रार्थं गुरूक्तदिशा सर्वदा विचिन्तयन्, जङ्गमोपदेशमनुसृत्य सृष्टिस्थितिसंहारादिक्रमेण महामन्त्रं यथावसरं सहस्रवारं अष्टोत्तरशतवारं वा अवश्यं जपेत्। एवं अष्टावरणानुष्ठानेन साधके भक्तिर्विकासः सञ्जायते॥

## पञ्चाचाराः

यथा अष्टावरणानि भक्तिवर्धने भक्तस्य रक्षाकवचानि तथैव पञ्चाचारा अपि साधनमार्गे आनुकूल्यं कल्पयित्वा भक्तं दुर्मार्गान्निवारयन्ति । अतः पञ्चाचारा अपि वीरशैवानां अवश्योपादेयाः । के ते पञ्चाचाराः, किं च तेषां स्वरूपं इत्यत्र चन्द्रज्ञानागमः तानेवं विवृणोति ॥

लिंगाचारः सदाचारः शिवाचारस्तथैव च ।
भृत्याचारो गणाचारः पञ्चाचाराः प्रकीर्तिताः ॥

गुरुणा दत्तलिङ्गाद्वै नास्ति दैवं महीतले ।
इति भावानुसन्धानं लिंगाचारः स उच्यते ॥

धर्मार्जितेन द्रव्येण यत्सन्तर्पणमन्वहम् ।
गुरुलिंगजंगमानां सदाचार इति स्मृतम् ॥

शिव एव परं ब्रह्म पञ्चकृत्यपरायणम् ।
न ततोऽन्या गतिरिति शिवाचारो हि कीर्तितः ॥

शिवस्य शिवभक्तस्य शिवधर्मादिकस्य च ।
न शृणोति च यन्निन्दां स गणाचार उच्यते ॥

शिवभक्तजनास्सर्वे वरिष्ठाः पृथिवीतले ।
तेषां भृत्योऽहमिति यत् भृत्याचार इति स्मृतः ॥

इत्यादिना तत्र तेषां स्वरूपादिकं उक्तम् । तथा च इष्टलिंगनिष्ठा, भक्तसन्तर्पणं, सर्वत्र शिवदर्शनं, शिवनिन्दकजनविमुखत्वं, दासभावश्चेति पञ्चाचाराणां तत्त्वं उक्तं भवति । सिद्धान्तशिखामण्युक्तदिशा षट्स्थलपरिशीलनायां तु एतान्यष्टावरणानि पञ्चाचाराश्च षट्स्थलेष्वेव अन्तर्भवन्तीति स्पष्टं अवगम्यते । एवं स्थिते तेषां प्राधान्याभिप्रायेण, षट्स्थलोपासनप्रस्थाने अत्यावश्यकत्वाभिप्रायेण च तेषां सहकारिसाधनत्वेन पृथगुत्कीर्तनमत्र कृतम् । एवं च अष्टावरणपञ्चाचारसहकृतेन षट्स्थलोपासन-

प्रस्थानेन अङ्गनामको जीवः जीवभावनिवृत्तिपूर्वकं शिवैक्यसुखं अनुभवितुं शक्नोतीति षट्स्थलसंप्रदायः प्रतिशृणोति ॥

लोके तु सार्वजनिकाभिप्राय एवं विद्यते—

" आरोग्यं भास्करादिच्छेत् भूतिमिच्छेत् हुताशनात् ।
ईश्वरात् ज्ञानमिच्छेत् मोक्षमिच्छेत् जनार्दनात् ॥ "

इत्यादौ तत्तत्फलप्रदातृत्वं तत्तद्देवासाधारणगुणः कथ्यते । लोकेऽपि हि जनाः कोशाध्यक्षात् धनं, धान्याध्यक्षाच्च धान्यं प्राप्नुवन्ति । एवं परमात्मना शिवेनैव तत्तदधिकारे नियुक्तानां देवानां उपसर्पणे को दोषः? अनुपसर्पणे वा तत्फलं अन्यः को वा दद्यात्? इति चेत् सत्यम्, पूर्वोक्तं सर्वं सामान्यमानवविषयम् । एतत्सिद्धान्ते तु जीवशिवयोः सतीपतिभावः अङ्गीकृतः । सती च स्वभर्तारमन्तरा अन्यं पुरुषं कथं वा उपसर्पेत्? वीरशैवीया भक्तिः अव्यभिचारिणी ऐकान्तिकेत्युच्यते । ननु तर्हि फलान्तरप्राप्तिः कथं कुतो वा वीरशैवस्येति चेदुच्यते – केवलपतिप्रीत्यर्थमेव कर्म आचारन्त्याः सत्याः पतिप्रीत्यतिरिक्तं फलं अपेक्षणीयमेव नास्ति । तादृशमनः- परिपाकवानेव वीरशैव इत्युच्यते । मनसः अपरिपक्वदशायामपि पतिः परमशिव एव अभीष्टार्थसिद्धये शरणीकरणीयः । पतिश्च परमशिवः सर्वज्ञः सर्वशक्तः करुणालुश्च स्वभक्तेभ्यः सर्वानप्यभीष्टान् स्वयमेव ददाति ॥

यथोक्तम् गीतायाम्—

अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥ (9–22)
येऽप्यन्यदेवताभक्ताः यजन्ते श्रद्धयान्विताः ।
तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम् ॥ (9–23)
अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ।
न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते ॥ (9–24)
यान्ति देवव्रता देवान् पितॄन् यान्ति पितृव्रताः ।

भूतानि यान्ति भूतेज्याः यान्ति मद्याजिनोऽपि माम् ॥ (9–25)इति॥

अत्र तत्तद्देवतार्चकानां तत्तत्फलमभिधाय 'मद्याजिनोऽपि मां यान्ति' इत्युच्यते। तत्र अपिशब्देन परमपुरुषार्थभूते परमशिवे भक्तस्य समरसभावः सूच्यते। निरतिशयानन्दे विलीनो भक्तः किमपरं आनुषङ्गिकं फलं अभिकांक्षेत? परमशिवधारणार्चनादिना समधिगतनित्याभियोगः भक्तः नित्यतृप्तः शान्तश्च यदा भवेत् तदा तस्य सर्वं योगक्षेम-परमशिव एव निर्वहति। तथाच यस्मै कस्मैचिदपि फलाय ये कञ्चनान्यं देवं याचितुं प्रसक्तिरेव नोत्पद्यते भक्तस्य ॥

अतः सर्वकर्मफलप्रदं सर्वशक्तं परमकारणं परमशिवमेव सतीभावेन प्रपन्नाः भक्ताः नान्यं कञ्चिदपि मनसापि स्मरन्तीत्यत्र विवादः एव नोत्पद्यते। एतादृशीं मानसीं दृढनिष्ठां उत्पादयन् षट्स्थलसंप्रदायः एकस्मिन्नेव जन्मनि सद्भक्तस्य जीवभावं परिहृत्य शिवभावं स्थिरीकृत्य निर्लिप्ततया व्यवहरणचातुरीं परिपूर्णतां च तस्मै अनुगृह्णाति। एवं भक्तियुक्ताः सर्वोऽपि निर्मला मानवाः षट्स्थलोपासनप्रस्थानमनुतिष्ठन्तः निरीहाः, निरामयाः, नित्यसुखिनो, नित्यसुन्दराश्च भवन्त्विति षट्स्थलसंप्रदायो निरीक्षते ॥

---

## षष्ठोऽध्यायः

## उपसंहारः

अस्त्विदं दर्शनमनवद्यं, परं तु अयतनप्रपञ्चस्य इतरदर्शनैर्निर्वर्तयितुं अशक्यं कीदृशं प्रयोजनं एतद्दर्शनेन निर्वर्तनीयं वर्तते इत्यप्यवश्यं चिन्तनीयम्। नो चेदस्य दर्शनस्य वैयर्थ्यं सञ्जायेत ॥

मानवजीवनस्य मुख्योद्देशः सुखसाधनमेव। सुखं च मनश्शान्त्या। अशान्तस्य कुतो वा सुखं लभ्येत? अशान्तिश्च रागद्वेषादिना। रागद्वेषादिश्च अहङ्कारममकाराभ्याम्। अहङ्कारममकारविरामे रागद्वेषादिनिवृत्त्या च मनसः प्रसादेन सुखं अनुभवितुं शक्यम् इत्येतावानंशः सर्वसम्मतः ॥

अहङ्कारममकारापगमश्च कथं संभवेत्? इत्यस्य विवेचनायैव सर्वाण्यपि दर्शनानि प्रवृत्तानि। आत्मनः स्वरूपमीदृशम्, आत्मनो जगतश्च संबन्धः ईदृशः इति परिज्ञानेन अहङ्कारममकारयोर्निवृत्तिर्भवेत्। अतः आत्मस्वरूपपरिज्ञानमेव मुख्यं सुखसाधनम्॥

उपनिषत्सु च 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्तः उपासीत' इति शान्तिसाधनमुच्यते। सर्वस्यापि जगतः ब्रह्मात्मकत्वेन, स्वस्यापि तत्र लीनत्वेन, अहङ्कारप्रसक्तिः परिहार्या। अहङ्कारस्य अप्रसक्तौ, तत्पुच्छभूतो ममकारोऽपि स्वयं निवर्तेत। एवं अहङ्कारममकारापगमादेव नरः शान्तो भवति। अतो जगतो ब्रह्मात्मकत्वज्ञानमेव सुखसाधनमिति पर्यवसन्नम्। अयं च विषयः सर्वसंप्रतिपन्नः। अतः अत्रापि वेदान्तिषु न विवादलेशः॥

ब्रह्मात्मकत्वं च जगतः कथं संभवति इति शङ्कायां तत्समाधान एव अभिप्रायभेदावसरः। इदं तु दर्शनं जगतो, ब्रह्मात्मकत्वप्रतिपादनविषये इतरदर्शनापेक्षयाऽतिशेते। अस्मिन्नपि दर्शने इतरदर्शनवत् भागद्वयं वर्तते। 'सिद्धान्तः संप्रदायश्च' इति एतत्प्रबन्धारम्भ एवोक्तम्॥

तत्र सिद्धान्तभागपरिज्ञानं मानवस्य भ्रान्त्यादिकमपनीय तदीयं ज्ञानचक्षुरुन्मीलयति। एवं उन्मीलितचक्षुः लब्धप्रज्ञो मनुजः स्वलक्ष्यं ज्ञात्वा तत्साधनानुगुणं संप्रदायमवलम्ब्य स्वलक्ष्यं साधयति॥

दर्शनक्षेत्रे विराजमानेषु सिद्धान्तेषु मध्ये अयं सिद्धान्तो वीर्यवत्तरः। सिद्धान्तस्य वीर्यवत्त्वं नाम न केवलं श्रवणकाले मनस्तुष्ट्याधायकत्वम्, किन्तु आचरणकालेऽपि तदानुरूप्यम्। श्रोतुं समीचीनोऽपि कश्चन सिद्धान्तः विमर्शनवेलायां न सन्तिष्ठेत। विमर्शनेन कथञ्चित् प्रतिष्ठापितोऽपि अनुष्ठानाय कश्चन सिद्धान्तः नोपयुज्येत। अतः परिचयवेलायां, परीक्षणकाले, आचरणविषये च यः सिद्धान्तः एकरूपतयोपयुज्येत स एव सिद्धान्तो वीर्यवत्तरो भवेत्। ग्रन्थे सुप्रतिष्ठापितोऽपि कश्चन सिद्धान्तः आचरणकाले नोपयुज्येत

चेत् स सिद्धान्तो वीर्यहीन एव स्यात्। आचरितुं सुलभोऽपि कश्चन सिद्धान्तः तत्त्वपरीक्षणकाले न प्रतितिष्ठेत चेत् सोऽपि सिद्धान्तो वीर्यहीन एव स्यात्॥

अयं च सिद्धान्तः आचारणमार्गे तात्त्विकप्रमाणपरिशीलनकाले च ऐकरस्यं प्रकटयन् इतरदर्शनापेक्षया वीर्यवत्तरो वर्तते॥

अद्वैतवादः खलु द्वैतपरप्रमाणानां अस्वारस्यात् परीक्षणकाल एव कुण्ठितो भवति। आचरणकाले तु सर्वथा स नोपयुज्यत एव। अनिर्वचनीयं, अवेद्यं, अनुपास्यं, अनुपदेश्यं च चेत् ब्रह्म तदर्थोपदेशश्रवणाचरणादिव्यापाराः कुण्टिता भवेयुरेव। अतोऽद्वैतवाद आचरणक्षेत्रे वीर्यहीन एव। आचरणक्षेत्रं हि सर्वथा भेदगर्भम्। अतश्च साधनावस्थायां जगतो ब्रह्मात्मकत्वानुसन्धानं अद्वैतदर्शनरीत्या दुर्घटम्॥

द्वैतवादेऽपि अद्वैतपरवाक्यानां गौणत्वेन प्रमाणपरीक्षणे कुण्ठित एव भवति। अतः द्वैतवादे आचरणक्षेत्रस्य लब्धसत्ताकत्वेऽपि, प्रमाणपरिशीलने वीर्यहीनं भवत्येव। अतश्च जगतो ब्रह्मात्मकत्वानुसन्धानं द्वैतमतरीत्यापि औपचारिकमेव संपद्यते॥

विशिष्टाद्वैतवादेऽपि अद्वैतपरप्रमाणानां निर्वाहः विशिष्टवस्तुविषयतया करणीयः। अतश्च प्रमाणक्षेत्रे विरोधाभावेऽपि गौरवमूलकं अस्वारस्यं अस्त्येव। जगतो ब्रह्मात्मकत्वस्य ब्रह्मविशेषणीभूतचिदचिन्मूलकत्वात् साक्षादेव ब्रह्मात्मकत्वानुसन्धानं तन्मतरीत्यापि दुर्घटमेव॥

एतत्सिद्धान्ते तु, भेदाभेदयोरुभयोरपि पारमार्थिकत्वस्याङ्गीकारेण सर्वप्रमाणानामपि समन्वय इति प्रमाणक्षेत्रे वीर्यवत्तरोऽयं सिद्धान्तः। एवं भेदस्य ससाम्यदशाया पारमार्थिकत्वेन, भेदगर्भः सर्वो लौकिको वैदिकश्च व्यवहारः सुप्रतिष्ठितो भवतीति प्रमाणक्षेत्रे, परीक्षायां, आचरणक्षेत्रे च ऐकरस्येन उपयुज्यमानो वीर्यवत्तरोऽयं सिद्धान्त इति विशेषः। अत एतन्मतरीत्या जगतो ब्रह्मात्मकत्वानुसन्धानं इतरमतापेक्षया सुकरम्। तेन च अहङ्काराभिमानविगमेन जीवस्य ज्ञानचक्षुरुन्मीलितं भवति।

ततश्च शान्तिः, ततश्च सुखमिति सिद्धान्तभागः मानवसुखसाधनविषये अत्यन्तमुपकरोति ॥

संप्रदायभागे च एतद्दर्शने इतरमतापेक्षया महान् विशेषः। अविशेषेण प्राणिसामान्यस्यपि एकस्मिन्नेव जन्मनि निरवधिकसुखरूपा मुक्तिः साधयितुं शक्या एव इति वेदमूलकसिद्धान्तेषु एतस्मिन्नेकस्मिन्नेव सिद्धान्ते अङ्गीक्रियते। न केवलं मनुजानां इतरप्राणिनामपि लिङ्गधारण-संस्कारैः मुक्तिं दातुं प्रभवति दयालुश्शिवयोगी ॥

पुरुषस्य यावानधिकारः मोक्षसाधने तावानेवाधिकारः स्त्रीणामपि। यावज्जीवानुष्ठेयायाः शिवपूजायाः ऋतुसूतकमपि नास्ति। ऋतुमत्यपि नारी यद्यपि अकरस्पर्शयोग्या, तथापि पूजामात्रसुनिर्मला भवति। अतः स्वेष्टलिङ्गैकपूजायां आशौचं नैव विधीयते। तथाच सूतकिनः नान्यस्पर्शयोग्या अपि पूजामात्रसुनिर्मला इति लिङ्गपूजाभिधं शिवयज्ञं नाम यावज्जीवव्रतं नियमयति वीरशैवसंप्रदायः। तत्र च स्त्रीपुरुषभेदो नास्ति। एवं च विना स्त्रीपुरुषभेदं, विना ब्राह्मणादिवर्णनियमं, विनैव च ब्रह्मचर्याद्याश्रमनियमं सर्वेऽपि मानवाः सच्चारित्र्येण, सौशील्येन, हृदयशुद्ध्या, प्रशान्तया धिया लिङ्गार्चनाधिकृताः शिवसायुज्यं इह जन्मन्येव साधयितुं प्रभवन्ति ॥

सन्ति खल्वितरे बौद्धादयः वर्णाश्रमभेदमनङ्गीकुर्वाणाः, परंतु न ते वेदप्रमाण्यमङ्गीकुर्वन्ति। ये तु वेदप्रामाण्यमङ्गीकुर्वन्ति वीरशैवव्यतिरिक्तास्ते सर्वेऽपि वर्णाश्रमानुरोधेन धर्मभेदं, स्त्रीपुंभेदेन धर्मभेदं चाङ्गीकुर्वन्ति। वेदप्रामाण्यमभ्युपगच्छन्तोऽपि वीरशैवाः वर्णाश्रमस्त्रीपुंभेदेन धर्मभेदं सर्वथा नाङ्गीकुर्वन्ति। व्याससूत्रगतं अपशूद्राधिकरणं तु वीरशैवेतरविषयमेव ॥

सङ्कुचितशक्तिकः परमात्मांश एव जीवः। जीवेषु च स्वरूपतः परस्परतारतम्यं नास्त्येव। यस्यां कस्यांचिद्योन्याम्—अन्ततस्तिर्यग्योन्यां जातोऽपि जीवः परमात्मांश एव। तादृशस्य सर्वयोनिगतस्यापि जीवस्य शिवयोग्यनुग्रह

वशात् शक्तिसङ्कोचनिवृत्तिपूर्वकमपरिमितशक्तिविशिष्टशिवभावापत्तिरूपमोक्षप्राप्तिं न कोऽपिवारयितुं प्रभवति ॥

मुमुक्षुः भारतीयो वा पाश्चात्यो वा, पुमान् वा स्त्री वा यः कोऽपि भवतु। ते एते सर्वेऽपि इमं धर्ममाश्रित्य मुक्तिं प्राप्तुमर्हन्त्येवैतत्सिद्धान्ते ॥

एवं विशालभावनया समन्वयदृष्टिः, जगतो ब्रह्मात्मकत्वदर्शनं चैतस्मिन्नेकस्मिन्नेव दर्शने समस्ति। अयमंशः षट्स्थलसंप्रदयवैशीष्ट्यं, सूक्ष्मदृष्ट्या विमृशतां स्वयंवेद्यो भवेत्। इदानींतने विज्ञानप्रगतियुक्ते जगति, तत्त्वज्ञानरहितं विज्ञानं मानवकुलस्य शान्तिं समाधानं च आधातुं नालंभवेदिति सर्वैः विदिते, सर्वेषु च सर्वसाम्यं आत्मीयभावनां च उद्घोषयत्सु, परस्परं मानवेषु विद्यमाने तारतम्ये अवश्यवर्जनीये च सति, इदमेकमेव दर्शनं सर्वस्यापि जगतो हिताय अभ्युदयाय च प्रभवेदित्यत्र न कश्चन संशयस्यावकाशः ॥

अत इदं दर्शनं न केवलं सर्वश्रुतिसमन्वयदर्शनं, अपि तु सर्वजगत्समन्वयदर्शनमपीति सर्वमवदातम् ॥

—: इति शक्तिविशिष्टाद्वैतदर्शने द्वितीयो भागः समाप्तः :—

* ग्रन्थश्च संपूर्णः ॥ *

## पारिभाषिकसंज्ञानां अर्थविवरणम्

अन्धपङ्गुन्यायः—स्वच्छक्तिशून्यस्यान्धस्य गमनशक्तिशून्यस्य पङ्गोश्च मेलनेन अन्धारूढः पङ्गुः मार्गमुपदिशति । तदुपदिष्टमार्गेण अन्धो गच्छति । एवं उभावपि उद्दिष्टं देशं प्राप्नुतः ।

अहिकुण्डलन्यायः—एक एव अहिः कदाचित् कुण्डलाकारं, कदाचित् दण्डाकारं यथा भजते तथा एकमेव ब्रह्म नानाकारं भजते ।

उपक्रमन्यायः— प्रकरणोपक्रमे योऽर्थः प्रतिपाद्यते तदनुरोधेनैव उत्तरवाक्यानि नेयानि इत्याशयः ।

कूर्माङ्गभङ्गन्यायः— भङ्गः रीतिः—कूर्मः स्वेच्छया यथा स्वावयवान् प्रसारयति आकुञ्चयति च तथा परमात्मा स्वान्तर्लीनं जगत् बहिः प्रसारयति, पुनः प्रलयकाले स्वस्मिन् लीनं करोति ।

कृत्स्नप्रसक्तिन्यायः—कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा इत्यधिकरणोक्तन्यायः । श्रुतौ यादृशं ब्रह्म प्रतिपाद्यते तादृशमेव तदङ्गीकार्यम् । न तत्र लौकिकाक्षेपावसरः इत्यर्थः ।

घटकश्रुतयः—परस्परविरोधपरिहाराय प्रवृत्ताः श्रुतयः (अन्तर्यामिब्राह्मणवाक्यानि ।

घट्टकुट्यां प्रभातम्—शुल्काहरणशाला घट्टकुटी । कश्चित् पुरुषः मार्गे शुल्कं अदित्सुः रात्र्यां मार्गान्तरेण प्रस्थितः । मार्गभ्रंशात् परिभ्रमन् प्रभातकाले तस्यैव शुल्कागारस्य समीपं आगच्छत् । एवं बहुविचारणेऽपि प्रथमोक्तकल्प एव विश्रान्तौ घट्टकुट्यां प्रभात तुल्यं तदिति उपयुज्यते ।

प्राप्ताप्राप्तविवेकन्याय.—अन्वयव्यतिरेकन्यायः । यत्सत्त्वे यत्सत्त्वं, यदभावे च यदभावः सः तदधीनः इत्यर्थकः ।

भूयोऽधिकरणन्यायः—परस्परविरोधे यस्मिन् पक्षे भूयसां स्थितिः स एव पक्षो ग्राह्य इत्यर्थः ।

भ्रमरकीटन्यायः—कीटः भ्रमरचिन्तया यथा भ्रमर एव भवति तथा जीवः शिवभावनया तदुपासनानैरन्तर्येण च शिव एव भवति।

मयूराण्डरसन्यायः—मयूरबर्हे विद्यमानानां विचित्राणां रूपाणां सूक्ष्मावस्थया मयूराण्डरसे सत्त्वेऽपि यथा नोपलभ्यते तथा विचित्रमिदं जगत् ब्रह्मण्यव्यक्तरूपेण वर्तत इत्यर्थः।

सरित्सागरन्यायः—समुद्रप्रवेशात्पूर्वं पृथगुपलभ्यमाना सरित् समुद्रप्रवेशानन्तरं यथा समुद्र एव भवति तथा संसारदशायां भिन्नोऽपि जीवः चिद्रूपेण साजात्यात् सायुज्यमुक्तौ शिवेन एकीभवति।

सागरतरङ्गन्यायः—तरङ्गबुद्बुदादः यथा सागरस्य अवस्थाविशेषाः तथेदं जगत् ब्रह्मण एवावस्थाविशेषः।

सुवर्णकुण्डलन्यायः—सुवर्णस्य अविनष्टस्यैव सतः यथा कुण्डलभावः तथा अविनष्टस्यैव ब्रह्मणः जगदाकारप्राप्तिः।

---

# अनुबन्धः

## कठिणपदानां अर्थसूची

अचलं—क्रियारहितम्।

अपृथक्सिद्धिः—अविनाभावः।

अविद्या–पारमेश्वरी संकुचिता शक्तिः।

अप्रमेयं—ज्ञातुं योग्यं।

अर्चावतारः– विग्रहे देवभावनया अर्चनम्।

अधोमाया - शक्तेः संकोचावस्था।

अमूर्तं—निराकारम्।

अभियोगः—ईषच्चलनं।

अभिमर्शः—यत्किंचित्कर्तृताभिमानः।

अनघम्—दीक्षासंस्कृतः शुद्धजीवः।

अष्टावरणानि—भक्तिवर्धकानि रक्षा-कवचानि।

आणवं– जीवे अणुत्वभावनोत्पादकः मलः आत्मनि अनात्मत्वबोधकः।

आनन्दोन्मादः—आनन्दाविर्भावः।

उपादानं — समवायिकारणम् ।
उपाधिः—स्वस्मिन् विद्यमानस्य गुणस्य स्वसन्निहिते प्रतीतिहेतुः ॥
उपादेयं—कार्यं ।
उपासनं — तैलधारावत् अविच्छिन्न-स्मृतिसंतानः ।
ऊर्ध्वमाया—शक्तेः परिशुद्धावस्था ।
ऐक्यप्रतिपत्तिः—अभेदज्ञानम् ।
ऐक्यः—शिवे विलीनः शरणः ।
कला—किञ्चित्कर्तृतारूपं आवरणम् ।
कल्याणविभूतिः—शिवानन्दानुभव रूपसारूप्यसामिप्यसालोक्यमुक्तिः ।
कालः—अनित्यतारूपं जीवावरणम् ।
कंचुकानि—जीवावरणानि, मुक्ति-प्रतिबन्धकानि ।
कारणपुरुषाः — धर्मस्थापनार्थं जगति-समागताः महाव्यक्तयः ।
कूटस्थं—निर्विकारम् ।
केवलः—स्वस्थावस्थः परमात्मा ।
गुरुः अज्ञाननिवारकः शिवयोगी ।
चरः—निर्लिप्ततया संचरन् शिवयोगी ।
चित् - चैतन्यशक्तिः ।
चित्तं—शक्तिसंकोचरूपा प्रकृतिः ।
जङ्गमः—मंत्रोपदेशकः शिवयोगी ।
तत्त्वम्—परमार्थः ।
तन्मात्रं—पञ्चभूतानां मूलतत्त्वम् ।
तैजसः—राजसाहंकारः ।
दर्शनम्—तत्त्वज्ञानसाधनम् ।
दान्तिः—अन्तःकरणक्षोभाभावः ।
दीक्षा—मलपरिहारकः शिवज्ञानो-त्पादकः संस्कारविशेषः ।
निर्मलः—आणवादिमलत्रयरहितः ।
नियतिः—अव्यापकतारूपं जीवावरणम्
निष्कल—सङ्कुचितशक्तिकः परमात्मा ।
निरञ्जनः—निर्लिप्तः, शिवयोगी ।
पतिः—नियामकः प्रभुः ।
परामाया—सच्चिदानन्दरूपिणी शक्तिः ।
पराहन्ता — शिवभावः ।
पशुः—पाशबद्धो जीवः ।
पराभक्तिः-भगवद्विषयिणी नैष्ठिकी भक्तिः
परः—स्वस्वरूपज्ञानी ।
परिणामः—समसत्ताकः अन्यथाभावः।
पवित्रं-शुच्यशुचिकालेऽपि धार्यलिङ्गम् ।
पाशः — दुःखहेतुर्बन्धः ।
पिण्डः—शुद्धान्तःकरणो जीवः ।
पिण्डज्ञानी — देहात्मविवेकवान् ।
पुरुषः—मायाशक्तिप्रविष्टः शिवांशः ।
प्रकृतिः —गुणत्रयसाम्यावस्था ।
प्रसादी —मनःप्रसादवान् सद्भक्तः ।
प्रयोजनं—देहे इष्टलिङ्गधारणम् ।

प्राणलिङ्गी.विज्ञातहृदयप्रकाशः भक्तः।
बन्धः—जननमरणसंसरणम्।
भक्तः—श्रद्धाभक्तियुक्तो जीवः।
भक्तिः—महनीयविषयिणी प्रीतिः।
भाजनं—विश्वाधारं परब्रह्म।
भूतादिः—तामसाहङ्कारः।
मलः—शिवशक्तिसङ्कोचः आणव-
मायेयकार्मिकरूपः।
माहेश्वरः—निष्ठाभक्तियुक्तः भक्तः।
मंत्रदीक्षा—मंत्रोपदेशः।
मायेयं—स्वीयवस्तुष्वनुरागरूपो मलः।
माया—भेदप्रधाना शक्तिः जीवे भेद-
भावनोत्पादिका च।
मूर्तं—साकारं ब्रह्म।
रागः—अपरिपूर्णतारूपं आवरणम्।
लिङ्गं—विश्वाधारो दिव्यप्रकाशः।
लीला—स्वयंप्रयोजनो व्यापारः।
विमर्शः—शिवस्य प्राथमिकी इच्छा।
विवर्तः—विषमसत्ताकः अन्यथाभावः।
विभुः—सर्वव्यापकः।
विश्वभाजनं—विश्वाश्रयः परमात्मा।
वेधा—गुरुशिष्ययोः हस्तमस्तक-
संयोगेन शिष्ये शिवतत्त्वसमावेशः।
वैकारिकः—सात्त्विकाहङ्कारः।
शक्तिः—परमात्मनिष्ठा सर्वकार्योप-
योगिनी चित्कला।
शरणः भक्तेः पराकाष्ठतायां निर्लिप्त-
तया व्यवहरन् शिवयोगी।
शान्तिः—बहिरिन्द्रियक्षोभाभावः।
षडध्वानः—परमात्मसन्दर्शनमार्गाः।
षट्संख्याकाः मार्गाः—वर्णाध्व,
पदाध्व, मंत्राध्व, भुवनाध्व,
तत्त्वाध्व, कलाध्वरूपाः।
सकलः—विकसितशक्तिकः परमात्मा।
समाधिः—योगस्य पराकाष्ठा।
सामरस्यं—नीरंध्रसंश्लेषः।
स्वस्था—शिवविलीना शक्तिः।
स्थलम्—विश्वाधारभूतं ब्रह्म।
क्षुभिता—कार्योन्मुखी शक्तिः।

## Opinion expressed by His Holyness Sri Kumar Swamiji, Navakalyana Math, Dharwar.

Dr. T. G. Siddapparadhya's Introduction to Śaktiviśiṣṭādvaita Darśana is a laudable attempt to present the metaphysical outlook of Vīraśaivism and to locate it in the field of philosophic thought. It is discussed in a critical and comparative manner, bringing into bold relief, the tenets of Vīraśaiva religion. The nature of Siva and Jīva, of Sakti and Māyā, the relation of the universe to man and of both to God, the technique of Ṣaṭsthala doctrine–all these points are clearly set forth in this book from the point of view of the Vīraśaivism. The author's acquaintance with the various Indian systems or Darśanas is deep and extensive. The author, therefore, deserves to be congratulated on his efforts and erudition.

## An extract of opinion of Dr. Albert D. MENDONSA, Ph.D. Head of the Department of Philosophy, Manasagangotri, Mysore.

" Dr. Siddapparadhya has chosen many texts of various traditions as matter to reveal the working of the philosophical principles. His great asset is his deep knowledge of scholastic Sanskrit which enables him to make use of linguistics in the solution of difficulties I congratulate him for his valuable work and wish him success in his intellectual adventure".

**Opinion of Sri S. SHANKARAPPA, M.A., B.T.,**
**INSPECTOR OF SANSKRIT SCHOOLS, IN MYSORE STA[illegible]**
**BANGALORE.**

Dr. T. G. Siddapparadhya's Sanskrit text on Sak[illegible] viśiṣṭādvaita Darśana is very useful to the stu[illegible] of Darśana for the critical and comparative study vīraśaivism from the philosophical and relig[illegible] points of view. As it contains all essential top[illegible] relating to Śaktiviśiṣṭādvaita system of Vedānta, [illegible] deserves to be studied as a Prakaraṇa Grantha. His Sanskrit, as he was accustomed to speak with the Pandits of the Sanskrit Colleges of Mysore and Bangalore, is so easy as to be followed clearly by every body. Besides, his own Introduction in English adds to the beauty of the text by presenting the tenets of vīrasaiva philosophy in an understandable manner. I entirely agree with the Philosophers and Swamijis who hold a high estimation of Dr. Siddapparadhya's valuable work on Vīraśaivism.

It is a good thing that he has brought out the Kannada and English versions of his Sanskrit Thesis. The public will be benefited thereby very much. His literary services to the human world will be distinctly remembered, as the credit of establishing Saktiviśistādvaita system of Vedānta as applicable to Vīraśaivism in accordance with the Ṣatsthala technique, chiefly goes to him. As his books clearly point out the practicability of Vīraśaiva religion to all Sādhakas, irrespective of caste, colour, or creed, I expect many such books from him.